# भारती

संस्कृत-मासपत्त्रिकायाः

दीपावली-विशेषांकः

श्री बद्रीनाथः



कार्तिकः

वर्षम् २८

अङ्कः १

नवम्बरः

१९७७

हरिप्रियां चञ्चलमानसां तां
सौभाग्यदात्रीं जगतः प्रकामम् ।
प्रसादपूर्णां दृशमुत्क्षिपन्तीं—
वन्देऽब्धिकन्यां मनसोऽप्यगम्याम् ॥

वार्षिकमूल्यम् दशमुद्राः १०.००
एकप्रतेः—एकं रूप्यकम् १.००

राजस्थान-मध्यप्रदेश-गुजरात-महाराष्ट्र-मद्रास-आंध्र-उत्तरप्रदेश-
बिहार-पञ्चनद-सर्वकारैः स्वीकृता

# विषय-सूची

सम्पादकः
दीनानाथत्रिवेदी मधुपः
साहित्यालङ्कारः

सहसम्पादकः
रामगोपालशास्त्री
जयपुरम्

# भारती

लेखैरुपष्टुता याऽऽस्ते भारतीव सितच्छदा
भारती भारतीयानां भासतां भवनेष्वलम्

संरक्षकः
श्रीदेवीशङ्कर तिवाड़ी
प्रबन्ध-सम्पादकः
श्रीगिरिराज शर्मा
भारती भवन
गोपालजी का रास्ता
जयपुरम्-२

वर्षम् २८ | कार्तिकः, विक्रमाब्दः, २०३४ [नवम्बरः, १९७७] | अङ्कः १

## मङ्गलम्

श्रीरामगोपालशास्त्री, जयपुरम्

गौरेण महसाऽऽश्लिष्टे
श्रीघनश्यामविग्रहे ।
मुक्तामालाऽम्बरे दीप्ता
दीपमालेव नम्यते ॥



## मासावतरणम्

श्रीरामगोपालशास्त्री, जयपुरम्

प्राक्कल्यं ललनाजनं प्रतिदिनं संस्नापयन्, राधिका-
धीशाराधनतत्परं च विदधत् संगापयन् तद्गुणान् ॥
दीपानामवलिं रमार्चनविधौ प्रज्ज्वालयन्नेत्यसौ
कुर्वन् ध्वान्तमयीममामपि शरज्ज्योत्स्नीसमां कार्तिकः ॥



या दूरीकुरुतेऽचिरादिह सतां दैन्यान्धकारं सदाऽ—
मावास्या खलु शस्यते सुफलदा लोकेषु सा कार्तिकी ।
तस्यां दीपकमालिकापरिवृतां संपूज्य लक्ष्मीं जनाः
सौभाग्यं कलयन्त्यपूर्वविभवं क्षिप्रं तया लालिताः ॥
राधाकृष्णपदारविन्दनिरता नार्योऽत्र श्रद्धान्विताः
मासस्नानमुपाचरन्ति विमलं सौभाग्यसंपत्तये ।
प्रीत्योपेत्य च देवमन्दिरममूः पुण्याश्च पौराणिकीः
शृण्वन्त्यो मधुराः कथाः सहचरीभिः सार्धमालोक्यताम् ॥

श्रीगंगाधरद्विवेदी
'सरस्वतीपीठम्' ब्रह्मपुरी,
जयपुरम्

# श्रीहनूमदादीनां वानरत्वे उपपत्तयः

श्रीदीनानाथशास्त्री सारस्वतः, विद्यावाचस्पतिः
अध्यक्षः "श्रीसनातनधर्मालोक" महाविद्यालयस्य
१ बी १६ लाजपतनगरं (नई दिल्ली-२४)

यदि वनवासित्वाद् मनुष्याः कथ्येरन् हनूमदादयः, तर्हि 'तौ शोणिताक्तौ युध्येतां वानरौ वनचारिणौ' ( वाल्मी० ४ । १६ । ३७ ) अत्र सुग्रीवबालिनोर्विषये वानर-वनचारिशब्दयोः पुनरुक्तिदोषोऽनिवार्य्यः स्यात् । परं पृथग्ग्रहणाद् वानर इति पशुजातौ रूढः शब्दः सिद्धः ।

'एवमेकान्तसंपृक्तौ ततस्तौ नर-वानरौ' (कि. ७ । २४) एवं बहुत्र, श्रीरामो नरः सुग्रीवश्च वानरः प्रोक्तः । उभौ वनवासिनावास्ताम् । यदि प्रतिपक्षिणामनुसारमुभौ श्रीवाल्मीकेः—मनुष्याविष्टौ, ततो नर-वानरौ-इति भेदस्य प्रयोजनीयता नासीत् ।

'तावासीनौ ततो दृष्ट्वा हनूमानपि लक्ष्मणम् । शालशाखां समुत्पाट्य विनीतमुपवेशयत्' ( ४ । ८ । १४ ) यत्र शालवृक्षस्य शाखामुत्पाट्य उपवेशनाद् हनुमतो वानरता सिध्यति ।

'संस्तूयमानो हनुमान्....समाविध्य च लाङ्गूलं ( कि० ६७ । ४ ) अत्र हनुमतः पुच्छास्फोटनं तदीयवानरतां परिचाययति मनुष्याणां पुच्छं न भवति ।

'कतिपये जनाः संशयीरन् यद्-हनूमदादीनां पुच्छं कदाचिद् आलङ्कारिकं भवेत् । परं ते स्वसन्देहसन्दोहमपाकर्तुं[१] रामायण—

वर्णितपुच्छघटनां प्रेक्षैरन्, यद्वशाद् लङ्कादाहः संवृत्तः । 'कपीनां किल लाङ्गूलमिष्टं भवति भूषणम् । तदस्य दीप्यतां शीघ्रं तेन दग्धेन गच्छतु' ( सुन्दर० ५३ । ३ ) । एतद्धनूमत्कृते रावणेन प्रोक्तम् । तथैव कृतम् । एतेन हनूमदादीनां कपीनां पुच्छवर्णनं स्वाभाविकम्, न तु आलङ्कारिकम् । वनवासिमनुष्याणां तु पुच्छं न भवति ।

केवलं रामायणे एव हनुमान् वानरः पुच्छयुक्तो वानरो न निर्दिष्टः, महाभारतेपि रामाख्याने तथात्वं दृश्यते—'महाकायो हनूमान् नाम वानरः' ( वनपर्व १४६ । ६६ ) 'तस्य लाङ्गूलमिनदं' (७१) ।

स्वामिना दयानन्देन मान्यायां 'शुक्रनीतौ प्रोक्तम्—'रावणस्य च भीष्मादेर्वनभङ्गे च गोग्रहे । प्रातिकूल्यं तु विज्ञातमेकस्माद् वानराद्, नराद्' ( १ । ५६ ) अत्र वानरेण रावणस्य अशोकवानिकाभङ्गकथया हनूमान्

१ कतिपये 'प्रथमचरम—इति सर्वनामता ।

सङ्केत्यते। भीष्मस्य विराटगोग्रहणे नर-(अर्जुन) द्वारा पराभववृत्तं सङ्केतितम्।

एतेन हनूमतो नरभिन्नवानरता सिद्धा।

'निकुञ्च्य कर्णौ हनुमान् उत्पतिष्यन् महाबलः' (सु० १। ३५) अत्र हनूमत उत्प्लवनसमये कर्णनिकुञ्चनं तदीयां वानरतां विशदयति। मनुष्येषु नैवं भवति।

ईदृक्षवार्तास्तु प्रतिपक्षिणस्तिरोधापयन्ति, परं बाह्यवार्ता अभिदधति यद् तेषां गृहाण्यासन् ते वस्त्राणि परिदधति स्म, तेषां पल्यङ्का आसन्, 'सुवर्णभूषणानि ते परिदधति स्म—इति—प्रतिपाद्य तान् मनुष्यान् साधयितुम् असफलं चेष्टन्ते। परं तदिदं व्यर्थम्। तेषां वानरप्रकृतिप्रदर्शनात् ते स्पष्टं वानराः सिध्यन्ति, परं ते तदानीं देवयोनौ जाताः। अतस्तदौपयिकं व्यवहार-वर्णनमपि सङ्गतं भवति। (ईदृशो व्यवहारोपि वानरराजानां भवति, न सर्वसाधारणवानराणाम्।

चक्रुः किलकिलामन्ये प्रतिगर्जन्ति चापरे। केचिद् उच्छ्रितलाङ्गूलाः प्रहृष्टाः कपिकुञ्जराः। आयताञ्चितदीर्घाणि लाङ्गूलानि प्रविव्यधुः (५। ५७। ४२, ४३) अत्र या याश्चेष्टा दर्शिताः, ता वानराणां, न नराणाम्।

'कदाचिद् वनवासिमनुष्याः कृत्रिमपुच्छमपि निर्मिमीरन्, तथापि तत्पुच्छं स्वभावत उच्छ्रितं न भवति, वानरगोमहिषादिवत्। 'लाङ्गूलचक्रो हनुमान् शुक्लदंष्ट्रः' (५। ०१। ६०) मनुष्यकृते दन्तास्तु प्रयुज्यन्त, न खलु दंष्ट्राः। पुच्छचक्रमपि मनुष्याणां न सम्भवि।

आस्फोटयामास चुचुम्ब पुच्छं ननन्द, चिक्रीड, जगौ, जगाम। स्तम्भान् अरोहद्, निपपात भूमौ निदर्शयन् स्वां प्रकृतिं कपीनाम्' (सुन्दरकाण्डे १०। ५४) इमा चेष्टा वानराणां भवन्ति, न वनवासिमनुष्याणाम्।

'वयं वनचरा राम! मृगाः (पशवः) मूलफलाशिनः। एषा प्रकृतिरस्माकं पुरुषस्त्वं (मनुष्यः) नरेश्वर' (४। १७। ३७) अत्र वाली आत्मानं पशुमाचष्टे, रामं च मनुष्यम्। तदुभयोर्भिन्नता सिद्धा। आम्, रामायणीया वानराः प्राकृता न सन्ति, किन्तु देवयोनितः समागता विशिष्टशक्तिशालिनो दिव्या आसन्। आशासे 'भारती' पाठकैः पूर्वपक्षिणां पक्षस्य निराधारता ज्ञाता भवेत्। अधिकमेतद्—विषये 'श्रीसनातनधर्मालोक'—ग्रन्थमालाया नवमे पुष्पे दृश्यताम्।



# सशक्तं सारगर्भितं चैकं दीक्षान्तं प्रवचनम्

अनुवादकः-विद्याभूषणः श्रीगणेशरामशर्मा, डूंगरपुरम्

हिमाचलप्रदेशस्य शिमलाशालाख्यनगरतः प्रकाश्यमाने 'दिव्य-ज्योतिः' इत्याख्यस्य मासपत्रस्य जूनमासस्याङ्के 'दीक्षान्तप्रवचनम्' इतिशीर्षकाद्यो हिन्दीभाषायां दीक्षान्तभाषणं प्रकाशितमास्ते। तच्च भाषणमतीव सशक्तं, सारगर्भितं, मर्मस्पर्शि चेति सर्वेऽपि संस्कृत हितैषिणो ज्ञातुमर्हन्तीति संस्कृते समनूद्योपस्थाप्यते:—

अहम्-त्वाम्-उपदिशामि। सत्यं वद। धर्मं चर। स्वाध्यायात् मा प्रमदः। सत्यात् न प्रमदितव्यम्। धर्मात् न प्रमदितव्यम्। कुशलात् न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। कुशलात् न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। मातृदेवो भव देवपितृकार्याभ्यां न प्रमदितव्यम्। पितृदेवो भव। अतिथिदेवो भव। आचार्यदेवो भव। राष्ट्रदेवो भव। यानि अनवद्यानि कर्माणि तानि त्वया उपास्यानि नो इतराणि। यानि अस्माकं सुचरितानि तानि त्वया उपास्यानि नो इतराणि। एष आदेशः एष उपदेशः। एषा वेदोपनिषद्। एतदनुशासनम्। एवमुपासितव्यम्। एवं चैतदुपास्यम्। शिवास्ते पंथानः सन्तु।

I instruct you. Speak the truth. Be devout. Do continuous and regular study of the vedas. Don't be negligent regarding the truth. Be expert. Be progressive. Don't show earelessness towards the theocrasy and qusequial rites. Worship mother, father guest and teacher like gods. Be sinless and innocent Don't do bad deeds. This is the order and instruction. This is what the Vedas and Upnishads say. This is the discipline. It should be followed. Let your ways be auspecious.

आदरणीयाः सभापतिमहाभागा आचार्यगणास्तथा च स्नातकाः!

संस्कृतमहाविद्यालयस्य दीक्षान्तप्रवचनार्थम् अतीवश्रेयस्तरमभविष्यद् यदि कश्चन प्रकाण्डविद्वान् आमन्त्रयिष्यत्। नाहं संस्कृतज्ञो विद्वान् किन्तु पूर्वपरम्परया तथा च विदुषां संगत्या ज्ञानं यत् स्वल्पमर्जितमस्ति, तेन ममहृदये संस्कृतवाङ्मयं प्रति अपारा निष्ठा आदरश्च भवति। निखिलस्य विश्वस्य कस्याश्चापि भाषाया वाङ्मयस्य च तुलनायां अमरभारत्या भाण्डागारं विशालतमं गम्भीरं च वक्तुं शक्यते। पूज्यः आचार्यवर्यः मद्विषये यदुक्तवान् तत्तस्य मां प्रति स्नेहो वात्सल्यं चास्ते। भवतामत्र भवतां सर्वेषां बन्धूनामाशीर्वादो भवेत्तदा सम्भवति यदहं देशस्य कृते किमपि कर्तुं क्षमः स्याम्।

**संस्कृतवाङ्मयम्—**

संस्कृतं नामसंसारस्यास्य समृद्धतमा प्राचीनतमा च भाषास्ते। विश्वभाषाणां जननीत्वेन सेयं मानवजातेः विशालतमं साहित्यं समाजं च प्राभावयत्। विदुषां गवेषकाणां च मतानुसारं तमिलभाषायाः कोषे एकलक्षे चत्वारिंशत्सहस्रमिताः शब्दाः संस्कृतस्य तद्भवाः शब्दाः सन्ति। अन्यासां भारतीयभाषाणामेकलक्षशब्दात्मकेषु कोशेषु क्रमशः ७५ सहस्रमिताः ८० सहस्रमिताः शब्दाः संस्कृतस्य वर्तन्ते। आचार्यस्य श्रीविनोबाभावेमहोदयस्य मतानुसारं तथाधुनातनानुसन्धानानुसारं दशसहस्रशब्दात्मके आंग्लभाषायाः कोषे सार्द्धद्विसहस्रमिताः शब्दाः संस्कृतस्य विद्यन्ते। लैटिनग्रीकभाषयोस्तु व्याकरणमपि संस्कृतानुप्राणितं वर्तते। अस्मादेव हेतोर्भारतस्य तत्कालीनो राष्ट्रपतिमहोदयः २४ फर्वरी १९७९ दिने अखिलभारतीयसंस्कृतशिक्षासम्मेलनमुद्घाटयन् देहल्यामुक्तवान् यद्धि—"संस्कृतं भारतीयानां भाषाणामेव जननी नास्ति वरञ्चानया समस्तस्य विश्वस्य सर्वाश्चापि भाषा जीवनमाप्नुवाना वर्तन्ते।"

संस्कृतं कापि पश्चात्यदृग्गामिनी जीर्णशीर्णा वाद्यत्वे न प्रयुज्जाना भाषा नास्ति। ये तथावगच्छन्ति ते तस्याः सम्पर्कं नासेदुः। संस्कृतेऽद्यापि च प्रोच्चस्तरीयं साहित्यं निरन्तरं लेलिख्यमानमास्ते। तत्र समयस्य परिवर्तनेन साकमेव नवनवा विधा जायमानाः सन्ति। वैदिकाद्युगादारभ्याद्यावधि रामायण-महाभारत-पुराण-बौद्ध-जैन-मुगलानां तथा चांग्लशासनकाल इत्यादिषु विभिन्नेषु कालेषु संस्कृतभाषा निरन्तरं साहित्यसरितः प्रवाहयन्ती सन्तिष्ठते। संस्कृतेऽद्यापि च दैनिक्यः, साप्ताहिक्यः, मासिक्यः, अर्द्धवार्षिक्यः वार्षिक्यश्च पत्रपत्रिका निरन्तरं प्रकाश्यमानाः सन्ति तथा चास्माकं सांस्कृतिकीं सजीवतां प्रकटयन्त्यो भारतस्यास्तित्वं पूर्णं साधयन्त्यो वर्तन्ते।

अद्यापि मठमन्दिरेषु, जन्म-विवाह-मरणादिषु संस्कारेषु, पारम्परिकेषु संस्कृतमहाविद्यालयेषु, नवीनपाठशालासु विद्यालयेषु, विश्वविद्यालयेषु विशेषतो वैदेशिकेषु विश्वविद्यालयेषु संस्कृतस्याध्ययनमध्यापनं व्यवहारश्च कोटिकोटिजनैः क्रियमाणोऽस्ति। अद्यापि च भारतस्य सर्वासु प्रादेशिकीषु भाषासु, हिन्द्यां तथा विश्वस्यानेकासु भाषासु संस्कृतस्यागाधः शब्दसागरो हिल्लोलकल्लोलैस्तरङ्गायमाणो वर्तते। अस्यामवस्थायां संस्कृतभाषा स्वयमात्मनो वैशिष्ट्यैस्तैस्तैः प्राचीना पुरातनापि सती चिरनवीना विद्यते।

**वर्तमाने परिप्रेक्ष्ये—**

भारतस्य शैक्षणिके सांस्कृतिके चेतिहासे संस्कृतस्याविच्छिन्ना परम्परा शृङ्खला चास्ते। भारतस्य राष्ट्रिय एकत्वे संस्कृतस्य योगदानं निर्विवादं सर्वसम्मतं वर्तते। सैवासौ भाषास्ते, यस्याः कृपयाद्यापि वयमेतत् शिक्षितुं प्रभवामो यद्धि 'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।" स्वस्यातीतसमयस्य यदत्यन्तमुज्ज्वलं स्वर्णिमं च दृश्यमास्ते तद्वयं भाषयानयैव

मार्मिकतया द्रष्टुं शक्नुमः। तद्दृष्ट्वा बुध्वा च यां शक्तिं, स्फूर्तिं गौरवं च वयमद्यत्वेऽनुभवामस्तदपि चेदानीन्तनाय समाजाय सर्वतो महद्दानमास्ते। अनेनैव कारणेन वयं पारतन्त्र्यकालेऽपि प्रोन्नतशिरसः प्रगतिशीलाः समभूम !

भारतवर्षं तावदनेकासां भाषाणां, भूषाणां धर्माणां च देशोऽस्ति। तानीमानि त्रीण्यपि च वस्तूनि नन्वतीवविचित्राणि सुकुमारस्वभावानि च विद्यन्ते, परन्तु संस्कृतभाषायां निहितैः संस्कारैर्भारतीयो हि समाजो हिमाचलात् केरलप्रदेशपर्यन्तं समानैर्मन्त्रैर्विवाहसंस्कारं सम्पाद्यमानमवलोक्यते, तदा परस्परं भ्रातृत्वस्य, बन्धुत्वस्य च भावना विवर्द्धते। संस्कृतमधीतः पञ्चाम्बुप्रान्तीयाभिजनो हिमाचलप्रादेशिको वा यदा वंगीय–पार्वत्ययोर्वा पञ्चाम्बु-पार्वत्य-बंगीयभाषाणां शब्दान् समानान् स्थानदूरताहेतोः केवलमुच्चारणभेदेन प्रयुञ्जानान् पश्यति तदा तस्य भ्रातृभावः सुतरां गम्भीरो द्रढीयांश्च भवति। संस्कृतभाषायाः साहाय्येन वयं प्राचीन-नवीना रीतीर्नीतीः, परिधानपरिवर्तनानि च पूर्णतया परिचिनुमो बुध्यामश्च। परिणामतोऽसंख्यभाषावेशभूषास्थाविश्वासवानसौ भारतदेशः शिलासङ्घात इव द्रढीयानेकाकार एकरूपश्च भवति। संस्कृताचार्यैः प्रतिष्ठापितेषु सिद्धान्तेषु समाधृताः सर्वे धर्माः सनातनधर्मस्यैवरूपाणि सन्ति तदा किमर्थं धार्मिकं वैमनस्यं भवेन्नाम ? वैदिकं साहित्यं मानवसमाजे भेदभावं न विधत्ते, एवमेवोत्तरकालीने संस्कृतसाहित्येऽपि मानवमात्रं बन्धुर्भ्राता चोक्तमास्ते। अत एव भारतस्य सुसंस्कृतः समाजो जातुचिज्जातिगतविरोधे वा साम्प्रदायिके सङ्घर्षेऽवपतितुं नार्हति। श्रीशङ्कराचार्योऽनेनैवोद्देश्येन चतुर्दिक्षु चत्वारि तीर्थानि (मठान्, आश्रमान्) संस्थापयामास।

एतस्य सर्वस्य कथनस्याशयोऽयमाऽस्ते यद्धि भारतस्य सर्वतो महती समस्यास्ति देशस्यास्यैकसूत्रे निबन्धनम्। तस्य चैकसूत्रनिबन्धनस्य दृढत्वापादनस्य चिरस्थायि सर्वतो महाप्रभावशालि साधनं संस्कृतं हि वर्तते। भाषाया अस्या वर्तमानयुगाय तदिदं सर्वश्रेष्ठं प्रदानं योगदानं च विद्यते।

देशस्यास्य द्वितीया समस्या नामानुशासनं तथा चरित्रनिर्माणम्। शिक्षा-क्षेत्रे संस्कृतभाषोपेक्षितास्ति। मामकीनोऽयं विचारोऽस्ति यद्वयं देशस्यानुशासनं चारित्र्यं च सार्वकालिकं रक्षितुमिच्छामस्तदा तदेतत् संस्कृतभाषां विनाऽपूर्णमेवावस्थास्यतीति।

अथास्माकं देशस्य तथा चास्माकं भारतीयसमाजस्य तृतीया विकटा समस्यास्ते धनहीनता तथा च शाश्वतिकी शांतिः। अस्याः समाधानं संस्कृतमाध्यमेन दार्शनिके चिन्तने एव हि निहितमास्ते। यदि च देशोऽसौ निर्धनतायाः कठोरान्निर्दयाच्च बन्धनान्मुक्तः कर्तव्योऽस्ति, यदि च मानसिकी अशांतिर्धनसंग्रहस्य च प्रतिस्पर्धा न्यूनतां नेयास्ति तदापि च

दर्शनोक्ताया अपरिग्रहवृत्तः शरणीकरणमेव सर्वोत्तमं साधनं वर्वर्ति। समयोऽयमद्यत्वे समाजगाम यदा भवद्भिः सर्वैरेतत् स्पष्टीकर्तव्यं भवति यद्धि संस्कृतभाषायां समाजवादि-समाजस्य स्थापनार्थं कियद्वा विशालं भाण्डागारं सम्भृतमवतिष्ठते इति।

अथ च जनसंख्यायां वृद्धिर्यास्माकं देशस्यापरा महती हि समस्या विजृम्भमाणास्ते, तामवरोद्धुं संयतस्य, चारित्र्यसम्पन्नस्य च समाजस्य महती हि खल्वावश्यकता वर्तते। अस्याः समस्यायाः समाधानायापि च संस्कृतभाषाऽमोघास्त्रं प्रसिद्धयति। इत्थमद्यत्वे संस्कृतभाषाऽस्माकं सुविशालस्य देशस्य विशालतमानां समस्यानां समाधानायैतावत् सशक्तं साधनं संसिद्धयते तदास्या उपेक्षणं कथमिव कर्तुं शक्यते ?

अद्यतनं युगं वैज्ञानिकं शिल्पतान्त्रिकं चास्तेऽत्र नास्त्येव सन्देहलवलेशः। सन्दर्भेऽस्मिन्नाहम् अमरीकादेशस्य गवेषिकाया एकस्याः Ms. Wheeler willcox महाशयाया एकं लघुं विचारं भवतां पुरतः समुपस्थापयामि। सा च लेखिका Sublimity of Vedas नामके स्वस्य ग्रन्थे ३२ पृष्ठे लिखितवती।—

"We have all heaid and read about the ancient religuon of India. It is the Land of great Vedas, the most remarkable works, containing not only religious ideas on a perfect life, but also facts which all the science has since proued true. Electricity, Radium, electrons, airships, all sum to be known to the sires who found the Vedus."

अथ भारतीयाया वेधशालाया विगतेषु-दिनेषु आर्यभट्टाख्यं यद्धि यानमस्माकं वैज्ञानिकैरन्तरिक्षे प्रेषितमास्ते, ततश्च ये सङ्केता प्राप्यन्ते तेषां शब्दावली, सङ्केतचिह्नानि च संस्कृत-शब्दा एव विद्यन्ते। तथ्यैरेभिः संस्कृतभाषाया वैज्ञानिके, शिल्पतन्त्रात्मके युगेऽपि च पूर्णोपयोगिता संसिद्धास्ते।

तथ्यैरेभिरेतत् पूर्णतया सिद्ध्यति यत् संस्कृतभाषास्माकं भूत-भविष्यद्भ्यां, वर्तमानेन च संयुक्तास्तीति। अस्मादेव कारणात् समय-समये आक्रामकैर्भारतधरायां पदन्यासं कृत्वैव तत्कालमेतां भुवं समुद्घातयितुं विनाशयितुं च प्रयासाः कृताः परन्तु ते यथा लोहं स्पर्शमणेः संयोगात् स्वर्णरूपमासादयति, तथैव संस्कृतभाषायाः सम्पर्कात् संस्कृतस्य भक्ताः समभूवन्। अस्मिन् सन्दर्भे दाराशिकोह-मैक्समूलर-विलियमजोन्स-टेलर-कीथ-मोनियरविलियम्स-कैप्लर-विलसन-ग्रासमन-नार्मन-ब्राउन-प्रभृतीनामसंख्यानां विदेशीयानां विदुषां नामधेयान्युच्चारयितुं शक्यन्ते। 'संस्कृत-विश्व-सम्मेलन'-सदृश्याः संस्थायाः स्थापना तथा च संस्थाया अस्या भिन्न-भिन्न-देशेषु प्रतिवर्षं सम्मेलनायोजनमस्यैव तथ्यस्य प्रमाणमास्ते।

**विकासः—**

पारतन्त्र्यस्य युगे संस्कृतवाङ्मयं सामान्यप्रजानां, संस्कृतविदुषां तथा राजकुलानां संरक्षणे शत्रूणाम् विनाशकेष्वनेकेषु प्रयासेषु सत्स्वपि चाक्षुण्णं समवतिष्ठत । स्वातन्त्र्यप्राप्तेरनन्तरमपि संस्कृतायोगस्य, केन्द्रियसंस्कृतपटलस्य, संस्कृतविश्वपरिषदः, केन्द्रियसंस्कृतपरिषदादीनां स्थापना समभूत् । केन्द्रियं राष्ट्रियं संस्कृतसंस्थानं केन्द्रियसर्वकारस्य तत्त्वावधाने संस्कृतस्य विकाशयोजनाः समग्रेऽपि देशे गतिशीला विदधदास्ते ।

इतो हिमाचलप्रदेशे संस्कृतस्य विशिष्टो गरिमा विद्यते । अत्रत्याः कला, उपभाषा, संस्कृतिश्च संस्कृतेनैवानुप्राणिता वर्तन्ते । ऋग्वेदस्य मन्त्राणां दर्शनमत्रैव महर्षयोऽकुर्वन् । समीक्षकाणां दृष्टिकोणः कामं यो वा को वा भवितुमर्हति । अध्यक्षमहोदयेन श्रीप्राथिमहाभागेन 'कुलूतदेशस्य कथा' इत्यभिधाने पुस्तके तदेतत् सप्रमाणं साधितमास्ते ।

हिमाचलप्रदेशोऽयं शिवपार्वत्योर्देवीदेवतानामृषिमुनीनां च प्रदेशो वरीवर्ति । अतो देशस्यान्यप्रदेशापेक्षया संस्कृतस्य प्रचार-विकाशोरुत्तरदायित्वमस्मिन् प्रदेशे तथात्रत्येषु लोकेषु समधिकं ज्ञायते । सर्वकारोऽत्र भाषाया अस्याः शिक्षाविकाशाय पञ्चमहाविद्यालयान् संचालितवानास्ते । परमेतेषु चत्वारः स्वातन्त्र्यात् पूर्वमपि जनसहयोगेन, राज्यप्रशासनान्तर्गतं प्रचलन्त आसन् । अनेके विद्यालयाः परतन्त्रतासमये नष्टा भ्रष्टा अभूवन् । तथापि सर्वकारो धन्यवादानर्हति यत् स्वातन्त्र्यप्राप्तेरनन्तरं स पुनस्तानेतान् विद्यालयमहाविद्यालयान् राजकीयमाश्रययं प्रदाय समरक्षत् तथा चैतेषां विषयेऽधुना रुचिं गृह्णाति, गाम्भीर्येण विचारं कर्तुमारब्धवान् परंतु विकाशस्य दृशा तेष्वेतेषु—इदानीमपि बह्वयस्त्रुटयो विद्यन्ते यास्तत्कालं दूरीकर्तव्या भवन्ति । अहमाशासे, विश्वसिमि च यद्धि जनतानां सर्वकारस्य द्वयोरपि च सहयोगेनैताः संस्थाः सुसम्पन्ना विधास्यन्त इति ।

प्रदेशेऽस्मिन् संस्कृताध्ययनस्य रुचिरिदानीं विवर्द्धमानास्ते । परिणामस्वरूपमिदानीं समये हिमाचलप्रदेशे दशाधिकाः संस्कृतविद्यालयास्तथा च पाठशाला जनताभिः सञ्चाल्यमाना विद्यन्ते । तासां व्यवस्थासञ्चालनेऽपि च सर्वकारोऽनुदानं दत्त्वा सहयोगं करोतु । अनेनात्र प्रदेशे सुरक्षिताया वैदिक्याः संस्कृतेस्तथा चाधुनिक्याः सभ्यतायाः सुन्दरः समन्वयो भवितुं शक्यते तेन चैकस्य स्वस्थस्य सम्पन्नस्य च समाजस्य निर्माणं भावि । तदिदमद्यत्वे देशस्य सर्वतो महती खल्वावश्यकतास्ते ।

**स्नातकेभ्यः—**

अद्यतन्यामस्यां शुभायां वेलायामहं स्नातकेभ्य आग्रहं करोमि यद्भवन्तः सुरभारत्या महत्त्वं गाम्भीर्येण बुध्यन्तु तथा च तदनुसारं स्वजीवनमादर्शं विदधतु । अद्यत्वे देशेऽत्र यद-

न्धानुकरणमभारतीया विचारधारा तथानाचारोऽस्माकं शिक्षणसंस्थासु वर्धमानाः सन्ति-तेभ्यो दूरे तिष्ठन्तु । अन्ते भारतीयचिन्तनमाचारविचाराः प्रणाली च देशस्याभ्युत्थाने सहायकाः सेत्स्यन्तीत्यत्र नास्त्येव कोऽपि च सन्देहः । एतेषां सर्वेषां रक्षाया दायित्वं विशेषतो भवत्सु वर्तते । प्रदेशस्यास्य नगरेषु ग्रामेषु च लोकान् संस्कृतभाषायाः सम्पर्के समानयन्तु येन वैदिकी परम्परा प्रत्येकं नरनारीषु खल्वक्षुण्णा बोभूयेत ।

भवन्तो मां यदाद्रियन्त तदर्थमहं चिरकृतज्ञः स्याम् ।

जयतु भारतम् ।

विभक्तिसप्तकयुतयच्छन्दर्गभितं-

# श्रीसिद्धाचलतीर्थाधिराजस्तुत्यष्टकम्

मुनि-श्रीमहोदयसागरजी-'गुणवाल:'

(कच्छ-प्रदेशस्थं जैनतीर्थं सिद्धाचलमवलम्ब्य स्तोत्रमिदं निबद्धं पाठकानां प्रमोदायोपह्रियते
—सम्पा०)

( इन्द्रवज्राच्छन्दः )

यस्तीर्थराट् श्रीविमलाचलाद्यै—
नैकैः पवित्रैर्वरनामधेयैः ।
ख्यातोऽस्ति नूनं भुवनत्रयेऽपि
सिद्धाचलं तं प्रणमामि भक्त्या ।।१।।

यं पूतवान्वै स युगादिदेवो,
देवाऽसुरैरर्चितपादपद्मः ।
अङ्काङ्कमेयं खलु पूर्ववारं,
सिद्धाचलं तं प्रणमामि भक्त्या ।।२।।

येन स्मृतेनाऽपि विमोचिता वै,
कष्टौघतस्तूर्णमनेकपान्थाः ।
भक्ताय वै वाञ्छितदानदक्षं,
सिद्धाचलं तं प्रणमामि भक्त्या ।।३।।

यस्मै सुभक्त्या स्पृहयन्ति नित्यं,
देवेन्द्रनागेन्द्रसुचक्रिणोऽपि ।
ध्यातव्यध्येयं ह्रि प्रणम्यनम्यं
सिद्धाचलं तं प्रणमामि भक्त्या ।।४।।

यस्माद् गताः सिद्धिपुरं सुरम्य—
मनन्तजीवा जितमोहमल्लाः ।
निर्जेतुकामोऽहमपीह मोहं
सिद्धाचलं तं प्रणमामि भक्त्या ।।५।।

यस्याऽऽश्रयादेव स चन्द्रमौलि—
र्भोक्ता स्वसुः सिद्धिसुखं प्रपेदे ।
संसारपाथोनिधिपोततुल्यं
सिद्धाचलं तं प्रणमामि भक्त्या ।।६।।

यस्मिन्कृता धर्मक्रियाऽल्पिकाऽपि
ह्यनन्तगुण्यं नु फलं प्रसूते ।
त्रैलोक्यकेप्यप्रतिमप्रभावं
सिद्धाचल तं प्रणमामि भक्त्या ।।७।।

भोस्तीर्थराट् सिद्धगिरे प्रसीद,
मां तारयाऽस्माद्धि भवाब्धिभीमात् ।
यः प्रार्थ्यते संयमिभिर्ह्यपीत्थं,
सिद्धाचलं तं प्रणमामि भक्त्या ।।८।।

निमित्तं प्राप्य यात्रायाः
सार्धं संघेन पुण्यकम् ।
कच्छस्थगोधरापुर्याः
श्रीसिद्धाचलकं प्रति ।।९।।

भद्रेश्वराऽऽख्यतीर्थे वै,
कच्छदेशस्थिते वरे ।
गुणाब्धिसूरिशिष्येण,
महोदारेण निर्मितम् ।।१०।।

प्रातरुत्थाय यो नित्यं,
भक्त्याऽष्टकमिदं पठेत् ।
स सिद्धाचलयात्रायाः,
फलं प्राप्नोत्यसंशयम् ।।११।।

आप ऊपर से सत्य दिखायी देने वाले इस तर्क के धोखे में न आइये कि भारत को जबरन संयमी न बनाया जाये और जो शराब पीना चाहे उन्हें पीने की सुविधा दी जाये। राज्य का कार्य लोगों की बुराइयों के लिए सहूलियत पैदा करना नहीं है। हम व्यभिचार के अड्डों का संचालन नहीं करते और नहीं उनके परवाने हैं। हम चोरों को उनकी चोरी की वासना-पूरी करने के लिए सुविधा नहीं देते। मैं शराबखोरी को चोरी और शायद व्यभिचार से भी अधिक निन्दनी यसमझता हूं। क्या यह अक्सर दोनों की जननी नहीं होती।

—महात्मा गांधी

( यंग इण्डिया ८-६-२१ )

गीर्वाणगीतार्चना–४

# अन्तर्यामी मम भगवान्

कवि०–डॉ० श्रीधरभास्करवर्णेकरः, नागपुरम्

भारतदेशो जयतु महान् । अन्तर्यामी मम भगवान् ।। ध्रु० ।।

तुंगहिमाचलकिरीटशाली । गंगा-यमुना-रेवा-माली ।
रविशशिमण्डलदिव्यकुण्डली। अगणित-ऋषिमुनि-विभूतिमान् ।।
भारतदेशो० ।। १ ।।

शान्तो दान्तो नित्यसंयमी । यागी योगी दृढयमनियमी ।
महामनस्वी स्वात्मविक्रमी । जगद्गुरुर्यो विद्यावान् ।।
भारतदेशो० ।। २ ।।

श्वसिति सनातनवैदिकमन्त्रम् । गायति रामायणं पवित्रम् ।
भागवतं भारतं विचित्रम् । महामनीषी प्रतिभावान् ।।
भारतदेशो० ।। ३ ।।

देशे देशे निपीडितानाम् । विवासितानां विपद्गतानाम् ।
असहायानां दीनजनानाम् । आश्रयदाता करुणावान् ।।
भारतदेशो० ।। ४ ।।

भवतु शरीरं चित्तं वित्तम् । सदैव भारतसेवायत्तम् ।
सर्वस्वं भारताय दत्तम् । स एव परमेश्वरो महान् ।।
भारतदेशो० ।। ५ ।।



# राघव ! पुनरवतारं धर हे !

[ रचयिता–आचार्य श्रीमधुकरशास्त्री; साहित्य-मीमांसाचार्यः,
साहित्यरत्नाकरः, आशुकविः, कोटा ]

क्षमामव, दुर्मद-राक्षस-मथितां राघव ! पुनरवतारं धर हे !

—१—

जगती-सरयूर्जनताऽयोध्या
खिन्ना रक्षां काङ्क्षति;
ज्ञान-दशरथो मति-कौशल्या
त्वद्दर्शनमभिवाञ्छति;
असुरोपद्रव-विघ्न-घनं
मुनि-तपोवनं भुवि मलिनं
सुख-रविरस्तं गत-इतिहेतो–
र्निमीलितं हृन्नलिनं;

समायाहि परिपाहि पुनस्स्वां धरणीं
करुणाऽऽकर ! हे !
क्षमामव, दुर्मद-राक्षस-मथितां
राघव ! पुनरवतारं धर हे !

—२—

विकटाऽऽटोप-पटीयस्यास्ते
कुमति-ताटका प्रोग्रा!
पुण्यमाश्रमं कलुषित-सत्ता–
मलिनीकर्त्तुं व्यग्रा,
खरदूषण-साहाय्यादत्या–
चारं प्रसार्य परितः;
कपट-रूपिणी स्व-वरणहेतो–
राष्ट्र-राघवेः पुरतः–;
स्थिताऽस्ति; भीषण-मत-
आचरणामेनां द्रुतमुद्धर हे !
क्षमामव, दुर्मद-राक्षस-मथितां
राघव ! पुनरवतारं धर हे !

—३—

विगत–विषादं पुन "निषादं"
विधेहि जीवन – धन्यं;
सुनियतिभाजन्नु 'भरद्वाजं'
कुरु धर्मज्ञमनन्यं
"शबरीं" श्रेयस्करीं सुभक्तां
विमलां सपदि सनाथय;
पापवर्त्मगान् खलान् विनाशय
"लक्ष्मणरेखां" स्थापय;

पुनर्दिव्यजीवन–मूल्यं संस्थापय
सुधर्म–पर हे !
क्षमामव, दुर्मद–राक्षस-मथितां,
राघव ! पुनरवतारं धर हे !

—४—

याम्य–दिशि प्रकटितप्रभावो
विहितोत्पातस्सततं;
निरीह-मानव-निवहं व्यथयन्
शूरम्मन्यो नियतं;

सन्मति-सीतामपजहार वै,
स्वार्थ-रावणो दुष्टः;
तमोगुणी, दुर्णय-निपुणोऽसौ
निर्घृणहृत्–परिपुष्टः;
क्रन्दति सुजनो नन्दति कुजनो
विभो ! विपदमपहर हे !
क्षमामव, दुर्मद-राक्षस–मथितां,
राघव ! पुनरवतारं धर हे !

—५—

भ्रष्टाचार-स्वार्थ-रूपिणं
द्रुतं रावणं मारय;
सन्मति-सत्कृतिरूपां सीतां
तद्वचथितामुद्धारय;
स्वादर्श-प्राज्यं शुभराज्यं–
–'रामराज्य'–मुद्भाव;
धर्मनीतिसंस्कृति-त्रिवेणीं
भारतभुवि प्रवाहय;
स्नेह-समृद्धि–सौख्यमय–
जीवनमनघं पुनर्वितर हे !
क्षमामव, दुर्मद–राक्षस–मथितां,
राघव ! पुनरवतारं धर हे;



## आप 'भारती' के लिए क्या कर सकते हैं ?

१. १०) रु० भेजकर ग्राहक बनिये ।
२. अपने परिचित मित्रों को सम्मानार्ह संरक्षक, विशिष्ट संरक्षक, साधारण संरक्षक, सम्मान्य सहायक, आजीवन सदस्य अथवा स्थायी ग्राहक बनने को प्रेरित कीजिए ।
३. अपनी सुन्दर व विद्वत्तापूर्ण रचनाएं 'भारती' में भेजिए ।
४. 'भारती' में अपने व्यवसाय के लिए विज्ञापन दीजिये व दूसरों को प्रेरित कीजिये ।
५. धन भेजकर भारती को स्वावलम्बी बनने में सहायता कीजिये ।
६. भारती' के अभिकर्ता (प्रचारक) बनिए ।
७. 'भारती' की कमियां तथा सुधार के लिए हमें समय-समय पर आपकी बहुमूल्य सम्मतियों से अवगत कराते रहिए ।
८. आपके नगर के विद्वानों को 'भारती' में लेख सामग्री भेजने को प्रोत्साहित कीजिए । हमें विश्वास है कि श्रीमान् एक अथवा अनेक रीतियों से 'भारती' की सहायता के लिए अग्रसर ही रहेंगे ः

# विचार-दर्शनम्

[ मूललेखकः—प० पू० श्रीमाधवरावसदाशिवरावगोलवलकरमहाभागः;
रा० स्व० सं० सरसङ्घचालकः ]
संस्कृतरूपान्तरकारः—आचार्यः श्रीमधुकरशास्त्री;
साहित्यमीमांसाचार्यः, साहियरत्नाकरः, कोटा (राज०)

## राष्ट्रचिन्ता

- ❀ अस्माकं दुरवस्थायाः कारणानि
- ❀ राष्ट्रिय-रोगस्य मूलम्
- ❀ तस्य ( निवारण-) समुपायः
- ❀ राष्ट्रिय-स्वयंसेवक-सङ्घः
- ❀ राष्ट्रियञ्चारित्र्यम्
- ❀ राष्ट्रिय-कार्यकर्त्तृगुणाः



### अस्माकं दुरवस्थायाः कारणानि,

हिन्दु-समाजस्याऽद्य विद्यमानाया दुरवस्थाया ह्रासस्य च चत्वारि कारणानि निगद्यन्ते। प्रथममज्ञानम्; द्वितीयं दारिद्र्यम्; तृतीयम्–इतरमतावलम्बिभिर्विधीयमाना अनवरतप्रयत्नाः; चतुर्थञ्च—अस्मदीये हिन्दुसमाजे ह्येकात्मताया नैयून्यमिति।

### प्रधानं कारणम्-एकात्मताया नैयून्यम्—

सर्वेष्वप्येतेषु ( उपर्युक्तेषु कारणेषु ) वर्त्तते नूनमन्तिमं कारणमेव प्रमुखम्। परितोऽपि चेद् भवेत् स्नेह-सम्पृक्तं वायुमण्डलं (वातावरणम्) तर्ह्यज्ञानेऽपि सति नार्हति व्यक्तिः ( समाजघटकरूपो मानवः ) परकीया भवितुम्। (सर्वेऽपि सामाजिका जनाः) चेदात्मीयतया दुःखं ( सम्भूय ) विभाजयितुमुद्यता भवेयुस्तर्हि दारिद्र्यमपि नैवोत्पीडयति। यदा हि स्वीयं मूलं सुदृढं भवेत्; तदाऽन्ये कियतोऽपि प्रयत्नान् विदध्युर्नाम, ( किन्तु ) न ते सफला भवितुं शक्नुवन्ति।

अद्य स्वकीयसमाजे प्रचलितानि कतिपयानि कार्याणि प्रति यदि दृक्पातः क्रियेत, तर्हि (तदिदं) ज्ञानं जायते यदनेके जना वनवासिषु जनेषु कार्याणि कर्त्तुं तु गच्छन्ति; परं तेषु ( कार्यकर्तृषु ) उपकारस्य भावनाऽऽधिक्येन भवति, न तावदात्मीयतायाः। उपकारस्य भावनया नाऽधिकं कार्यं सम्पद्यते; आत्मीयताऽपेक्ष्यते।

### मनुष्यस्याऽऽवश्यकता कियती ?

अत्रैकः प्रश्नस्समुत्पद्यते, यन्मनुष्यस्याऽऽ-

वश्यकतायाः (आकाङ्क्षायाः) मापदण्डः कोऽस्ति ? मनुष्यस्य तृष्णा हि न कदापि तृप्ता जायते । सा प्रत्यहं प्रबला सञ्जायते । "न जातु कामः कामानामुपभोगेन शाम्यति" यथाऽग्नौ घृतपातनादग्निर्मन्दो न भूत्वाऽधिकं प्रचण्डो भवति, तथैव कामोपभोगैस्तृष्णा क्षीणा नो भूत्वाऽधिकं बलवत्येव भवति ।

**टाल्स्टायस्य कथा—**

विषयेऽस्मिन् 'टाल्स्टायः'—"मनुष्यस्य कृते कियती भूमिरपेक्ष्यत"—इति नाम्नीं कथां लिखितवान्; यस्यामसौ निबोधितवान् यत् केन प्रकारेण भूमेस्सम्पत्तेश्च लोभी कृषीवल एक एकदा विना मूल्यं भूयस्या भूमेरवाप्ते-र्लोभे निपत्य स्वप्राणेभ्य एव वञ्चितोऽजा-यत । विना मूल्यं भूमिप्राप्तेरियं +प्रतिभूति-रासीद्यत् सूर्यस्यास्तमयं समयं यावत् कृषी-वलो यावत्या भूमेः परिक्रमणं विधाय पुन-र्निश्चितस्थलपर्यन्तं यास्यति; तावती समग्रा भूमिस्तस्यैव भविष्यति" इति । यावद्दिवस-मन्न-जल-ग्रहणमन्तराऽधिकाऽधिकपरिश्रम-करणस्य लोभे निपतितो वराकः कर्षकोऽन्ते क्लान्तो भूत्वा (भूवि) न्यपतत् । निश्चित-स्थलपर्यन्तं गमनात् प्रागेव च मृत्युमवाप्त-वान् । अन्ते च तं भूमेरन्तर्निधातुं केवलं सप्तहस्त ('फीट') परिमित-दीर्घायाः, सार्ध-हस्त (फीट)-द्वय-परिमिताऽऽयतायाश्च भूमे-रावश्यकता समभूत् ।

**सप्तहस्त ('फीट') परिमितैव (धरा) समपेक्ष्यते—**

अभिप्रायोऽयमस्ति यन्मनुष्यस्य कृते केवलं सप्तहस्त (फीट) परिमिताया वरि-ष्या आवश्यकता विद्यते । समुद्बोधिकयाऽ-नया कथया महत्याऽद्भुतया रीत्या टाल्स्टाय-स्तदेतदुद्बोधयितुमचेष्टत यद्—इच्छानां दासो भूत्वा मनुष्यो मृग-मरीचिकायां भ्रान्तो भवति, तस्याः पृष्ठे धावत एव च तस्य जीवन-लीला सम्पूर्णा सञ्जायते—इति ।

**उपभोगे संयमः**

यस्मिन् मनुष्य-जीवने राष्ट्रनिर्माणस्य पवित्रं 'कार्यं' कर्त्तुमस्मभ्यमत्यन्तंसौभाग्य-पूर्णोऽवसरस्सामर्थ्यञ्च समुपलब्धं तत् (म-नुष्य-जीवनं) छायायाः पृष्ठतो धावने (वयं) नष्टं न कुर्याम । एतस्या विडम्बना-यास्त्राणस्यैक एवाऽऽस्त उपायो यद् वयमुप-भोगं संयतं स्वकीया आवश्यकताश्च सीमिता-नियन्त्रिता रक्षेम । भौतिकेभ्य आकर्षणेभ्य-श्चोर्ध्वमुत्थाय विशुद्धशास्त्रीयदृष्टिकोणानु-सारेण जीवनं यापयेम । एतस्याऽयमर्थोनाऽ-स्ति यन्निखिलेभ्यः प्रयत्नेभ्यस्तिलाञ्जलिं दद्याम; निष्क्रिया भूत्वोपविशाम; इति । प्रत्युत बुद्धेः परां काष्ठां; तनुमनसोश्च सम-ग्राश्शक्तीस्संयोज्य साधन-सम्पत्तिमेकत्र कुर्याम; परं तस्या उपभोक्तारस्सन्तो

+ अर्थात् 'शर्त' इति भाषायाम् ।

( भूत्वा ) नोपविशेम । वयं तु+न्यासरक्षकाः स्मः ।

### सेवाऽकिञ्चनभावेन भवेत्—

भारतीय-जीवन-रचनायास्तमिमं सांस्कृतिकं दृष्टिकोणमादाय समष्टौ परमात्मनस्साक्षात्कारं कुर्वन्तो वयं कार्यरूपेण;–न तु शब्दमात्रेण—एतस्य समाजरूपस्य पुराणपुरुषस्य, निरीहभावतश्च पूजां विदध्याम । सैषा दृष्टिश्चेदस्मासु भविष्यति, तर्ह्येक एव समष्टिपुरुषोऽभिन्नया रीत्याऽऽसेतुहिमाचलं व्याप्य दृष्टिपथमायास्यति । काचित् क्षुद्रा भावना हृदयं स्प्रष्टुमपि नो शक्ष्यति । तस्य परमस्य पुरुषस्य चाऽऽराधनायां स्वकीयं सर्वस्वं हुत्वाऽपि परमायाश्शान्तेरनुभवो भविष्यति ।

### दयाया दानस्य वा भावोऽनुचितः—

सर्वसाधारणबुद्धौ निश्चय एवंविधो भवेद् यत् समाजं प्रति भगवत्पूजायाः पवित्रया भावनया, अखण्डया सेवावृत्त्यैव चाद्यतनीनां दुर्भगाणां समस्यानां पारं यातुं शक्यते ।

स्वकीयानेव समाजबन्धून् दुःखदैन्ययोरपारपारावारमध्यादुद्धर्तुं करुणाया दयाया दानस्य वा वृत्तिः पर्याप्ता न भविष्यति । ईश्वरस्याभिव्यक्तिमनुभूयाऽऽजीवनं स्थायिनः परमश्रद्धायुक्तस्य सेवाभावव्रतस्य परिग्रहणमिति सोऽयमेवाऽद्यतनविषमसस्यामध्यान्निस्सरणस्य श्रेष्ठस्समुपाय आस्ते खलु ।

### सङ्घटितां सेवां विदध्याम—

व्यक्ते रूपे पृथक्पृथक् सेवा-करणाद् यद्यपि किञ्चित्तु कल्याणं भवत्येव, तथापि व्यक्तिव्यक्तयः पृथक्-पृथक् कियदपि कार्यं सम्पाद्य समाजस्य समासामेव समस्यानां समाधानं कर्तुं न शक्नुवन्ति । सम्पूर्णस्य समाजस्य साधारणं स्तरमुन्नेतुं तु समाजव्यापिनः सामूहिकाद् रूपादेव प्रयत्नोऽपेक्ष्यते । सामुदायिकरूपेण समग्राणां समस्यानां समाधानस्य सामर्थ्यमिदमेकसूत्रबद्धानि, पवित्राणि, चारित्र्यसम्पन्नानि, लक्षं-लक्षं हृदयानि संयोज्य निर्मितेनाऽनुशासनयुक्तेन सङ्घटनेनैव भवितुमर्हति । अन्यथा नहि ।

### एतन्निमित्तमेवाऽस्मदीयं कार्यम्—

इदमेवोद्देश्यमादाय प्रचलति शुद्धे सांस्कृतिक आधारे दृढं मूलबद्धं स्वकीयमिदं कार्यं कयाचिच्छङ्कयाऽऽशङ्कया वा विना, विचलिता नो सन्तः पूर्णेन विश्वासेन कुर्वन्तो भवेम । एतत्कार्यसम्पादने कञ्चिदन्यं समुदायं प्रति विलोकनस्य कस्याऽप्याशीर्वादग्रहणस्य, कस्याश्चिदपि वा भौतिक्यास्सत्तायाः प्रसादप्राप्तेर्विचारस्य कृते किञ्चिदपि नास्ति स्थानम् । इतरेषां प्रयत्नेषु स्वकीयः सांस्कृतिको दृष्टिकोणः प्राप्येत;–केवलमियत्येव तेषां विषये विचारस्य प्रयतनस्य चाऽऽवश्यकता विद्यते ।

### एतेनैव समाजः सुखी भविष्यति

समाजरूपनारायण–सेवापवित्रकार्यस्य कृते कस्याश्चिदपि भौतिक्याश्शक्तेः कृपाया-

❀ निधि । न्यासरक्षकः—"ट्रस्टी"–इति यावत् ।

मवलम्बितीभवनस्य किमपि कारणत्वं भवितुं नार्हति। महत् कार्यमिदं वयं सर्वविधेभ्यो बाह्यप्रभावेभ्यः स्वतन्त्रं रक्षन्तः सम्पादयिष्यामः। तुच्छ-तुच्छवार्ताभ्यो विचलितीभूय भौतिकता-प्रवाहे स्व-प्रवाहणं न वै लाभप्रदम्। निजं जीवनं पावनं निष्पादयन्तः समाजेन सार्धमेकरूपा भूत्वा, स्वस्य निमित्तं सेवा नान्यत् किञ्चिदपि,—इतीमामेव धारणां मनसि निदधतो (वयम्) स्नेहपाशनिबद्धस्य सङ्घटनस्य घटकीभूय विशुद्ध-सेवा-द्वारेणैव समाजस्य दुःखं दारिद्र्यञ्च दूरे कर्त्तुं शक्ष्यामः।

**परितोऽनेके वादास्सन्ति—**

अस्मान् परितोऽद्य नैके वादा जीवन-प्रणाल्यश्च प्रचलन्त्योऽवलोक्यन्ते। तासां विषये च प्रचुरमात्रायांञ्चर्चा वाद-विवादादिकमपि च प्रचलति। तेषु केचिद् भारतीयास्सन्ति, कतिपयेऽभारतीयाः सन्ति शुद्धाया भारतीय-संस्कृतेश्शिक्षायाश्चाऽनुसारेण चलन्ती स्वीयाऽप्येका जीवन-प्रणाली विद्यते। नाऽहमेतद्वाञ्छामि,—यद् भवन्तोऽन्यासां समासां विचार-धाराणां जीवन-रचनानाञ्चाऽभ्यासं न कुर्वन्तु. अभ्यासमवश्यं कुर्वन्तु नाम, सर्वासामेव कुर्वन्तु, किन्तु सर्वोत्तमत्वाद् परमहितकारित्वाच्च का स्वीक्रियेत? इत्येतस्य विचारस्सञ्जायेत।

**परन्तु, भारतीया सर्वश्रेष्ठा—**

विचार-धाराया निकषोऽयं यद् राष्ट्रियस्य स्वाभिमानस्य गौरवस्य च संरक्षां कुर्वन्तो वयम् कस्या विचार-प्रणाल्या अनुसारेण चलित्वा स्वं देशं वैभव-सम्पन्नं सम्पादयिष्यामः? अस्मिन् निकषे चेदद्य प्रचलन्तीः समग्रा अपि धारा उल्लेह्य (उल्लीढाः कृत्वा) द्रक्ष्यामस्तर्हि निश्चप्रचमेव वयं निर्णयमिमम-धिगमिष्यामो यद् यद्यपि समाजसेवासम्पादनस्य सन्ति नैके मार्गास्तथापि भारतीय-संस्कृते रूपं समाजं परमेश्वरस्य व्यक्तं रूपं मत्वा तं पूज्यतममवबुध्यन्तो यस्य सेवां परमावश्यकीं, परममङ्गलकारि कर्त्तव्यं (स्वं) ज्ञात्वा, जीवन-चालनस्याऽऽदेष्ट्री निजा जीवन-प्रणाल्येव सर्वश्रेष्ठाऽस्तीति। अस्यां विचार-प्रणाल्यां दृढं विचारं रक्षित्वा परमेण स्नेहेन, शीलेन, संयमेन च संयुक्तान्, निरभिमानवृत्ति-सम्वलितान् लक्ष-संख्याकान् जनान् यदि वयमेकस्यां मालायां संग्रथ्य विशालसामर्थ्यवत् समाजव्यापि च सङ्घटनं न स्थापयिष्यामस्तर्हि देशस्य विभिन्नानां समस्यानां समाधाने महान्तो-महान्तो मार्गाः केवलं वायुवार्ताः (कल्पनारूपा एव) भूत्वा स्थास्यन्ति।

**प्रथमं कार्यं पूर्वम्—**

पन्थानो (यदि) लघीयांसो भवन्ति, तर्ह्यपि काचिद् बाधा नो समायाति। यदि चारित्र्यसम्पन्ना, निष्ठावन्तः, सेवापरायणा-एकस्यां योजनायामेकस्मिन् सूत्रे चाऽनुबद्धा भूत्वा प्रचलन्तो जनाः पर्याप्तमात्रायामेकत्र समागच्छेयुस्तर्हि समस्तानां समस्यानां समाधानं दुष्करं न भविष्यति। यदि वार्तेयं सत्या, तर्हि प्रथमावार्ता प्रथममिति निममानुसारेण चेत् प्रथमा वार्ता मनुष्यतः प्रारभेत, (तां) मनुष्यनिर्माणादेव प्रारभेत। (क्रमशः)

# कार्णाटकी कथा

रचयिता—वि० साम्बदीक्षितः गोकर्णः

कर्णाटगोश्रुतिक्षेत्रवासिनं साम्बदीक्षितम्
शिष्याः सर्वे समभ्येत्य प्रोचुस्ते विनयान्विताः ॥ १ ॥
कर्णाटकस्येतिहासं ब्रूहि नः करुणानिधे ।
तदोवाच स गणेशो भक्त्या देवान्स्तुवन्मुदा ॥ २ ॥
गजाननं वक्रतुण्डं द्विबाहुं सिद्धिदायकम् ।
कर्णाटकेतिहासस्य सम्पूर्त्यै तं नमाम्यहम् ॥ ३ ॥
तथा सुबुद्धिदात्रीं च पङ्कजासनसुन्दरीम् ।
सरस्वतीं प्रणम्याहं वक्ष्ये कार्णाटकीं कथाम् ॥ ४ ॥
भो शिष्याः शृणुत स्थानमिदं कर्णाटकाभिधम् ।
गोकर्णस्य च कर्णाटे सम्बन्धोऽस्ति विशेषतः ॥ ५ ॥
कर्णे कर्णे चाटतीति कर्णाटकमितरीणा ।
पूर्वं काले प्रसिद्धं तत् दंडकारण्यसंज्ञया ॥ ६ ॥
तदा सर्वं वनमिदं हिंस्रव्याघ्रादिसंयुतम् ।
भारताद्दक्षिणाद् देशात्पुरा द्राविडसंज्ञकाः ॥ ७ ॥
समागता इहैवेति नैकेषां विदुषां मतम् ।
तत उत्तरतश्चार्याः सम्प्राप्ताः शान्तिसंयुताः ॥ ८ ॥
वीराः शूरास्तथा धीराः कुशलाः सर्वकर्मसु ।
काले पल्यस्तथा ग्रामाः पत्तनानि महान्ति च ॥ ९ ॥
समभूवन् समावेशादार्याणां द्रविडैः सह ।
तदाऽत्रार्यो द्राविडश्च त्वार्यद्राविड इत्यपि ॥१०॥
समाजत्रितयं जातं ततः कार्यात्तु जातयः ।
विविधाः समजायन्त जनसंहतयस्तथा ॥११॥
भाषाणामत्र कर्णाटे प्रमुखा कन्नडाभिधा ।
यावत्कन्नडभाषा स्यात्तावत्कर्णाट उच्यते ॥१२॥
कर्णाटकस्य सीमा तु प्रथमं परिकीर्त्यते ।
पूर्वे कोलारभूमिस्तु दक्षिणे मद्रपूस्तथा ॥१३॥

पश्चिमे सरितो नाथ उदङ् नैजाम ग्राश्रितः ।
पुरा चात्र महाराजा बहवः सम्प्रजज्ञिरे ॥१४॥
तदानीं मुद्रणार्थानां सामग्रीणामभावतः ।
सर्वं ग्राविण ताम्रपत्रे ताडपत्रे च लेखनम् ॥१५॥
वर्तते, तेन प्राचीनवृत्तज्ञानं सुदुष्करम् ।
ईशपुत्रस्य शाकायाः पूर्वे हि शतकत्रयात् ॥१६॥
मगधे चन्द्रगुप्ताख्यः सार्वभौमो बभूव ह ।
कर्णाटकस्तु तस्यासीत्तदानीं, भद्रबाहुना ॥१७॥
उत्तरे भारते वर्षे द्वादशाब्दमवग्रहः ।
इति जैनेन मुनिंना कथितो भाविदुःखदः ॥१८॥
द्विषट्सहस्रशिष्यैः स चागतोऽत्र महामुनिः ।
ते सर्वे महिषूर् प्रान्ते हासने मण्डले मुदा ॥१९॥
श्रावणे बेलगोलाख्ये ग्रामे वासं प्रचक्रिरे ।
तत्र रुग्णेन मुनिनाऽऽदिष्टाः पुन्नाटमाययुः ॥२०॥
तस्य शिष्यश्चन्द्रगुप्तो गुरुसेवार्थमागतः ।
भद्रबाहौ गते चन्द्रगुप्तो द्वादशवार्षिकम् ॥२१॥
ततस्तप्त्वा क्रैस्तपूर्वे षडष्टद्विगते मृतः ।
भद्रबाहोश्च तत्रैव पादाङ्कितशिलास्तथा ॥२२॥
गुहा च चन्द्रगुप्तस्य मन्दिरं च प्रदृश्यते ।
अशोकश्चन्द्रगुप्तस्य पौत्रो वीरो महामतिः ॥२३॥
बिन्दुसारसुतः श्रीमाञ्जैनधर्मप्रवृद्धिकृत् ।
स तु जैनोपि कालेन बौद्धधर्मी बभूव ह ॥२४॥
बौद्धधर्मप्रचाराय तेनैव प्रहिता जनाः ।
धर्मप्रचारको तेषु गुरू चात्र समागतौ ॥२५॥
इति मैसूरुदेशस्य शिलालेखेषु लभ्यते ।
सर्वत्र भारते वर्षे बौद्धधर्मः प्रतिष्ठितः ॥२६॥
शकपूर्वं बाणमुनिवर्षे बौद्धाः क्षयं गताः ।
पुनर्वैदिकता प्राप्ता शुङ्गराजप्रतिष्ठिता ॥२७॥
वसुदेवः काण्वराज्यस्थापकोऽभून्महामनाः ।
शकपूर्वं त्रिसप्तत्याश्चतुःषड्वर्षभाक् स तु ॥२८॥

तदा मण्डनमिश्रेण बौद्धधर्मः प्रखण्डितः ।
तथा वैदिकधर्मः सुस्थापितस्तेन सूरिणा ॥२९॥
ईशवीयात्पूर्वमेव द्विचत्वारिंशदब्दतः ।
शंकराचार्यवर्यास्तु तदानीं सम्प्रपेदिरे ॥३०॥
मैसूरप्रांते हि शृंगेर्यां श्रीमठः स्थापितस्तु तैः ।
अद्वैतार्थप्रचाराय स्वामिनः सम्प्रतिष्ठिताः ॥३१॥
आद्यः सुरेश्वराचार्यसंज्ञया चाभवद् गुरुः ।
पूर्वं मण्डनमिश्रो योद्वैती नित्यं हि कर्मठः ॥३२॥
तेनाद्वैतप्रचाराय रचिता ग्रन्थराशयः ।
अद्यापि तत्स्थानमहो गुरुभिः शोभते दृढम् ॥३३॥
ततः शालिवाहोऽथवा शाकवाहः
नरेन्द्रस्य काण्वस्य वंश्यं निवेश्य ॥
स तु स्वीयराज्ये विना बौद्धधर्मं
वराद्वैतधर्मंप्रतिष्ठां चकार ॥३४॥

इति श्रीसांबदीक्षितविरचिते कर्णाटकेतिहासे

प्रथम सर्गः

~~~

॥ अथ द्वितीयः सर्गः ॥

शालिवाहे मृते ह्यत्र राजानो बहवोऽभवन् ।
शकात्पञ्चशते वर्षे राष्ट्रकूटाभिधा नृपाः ॥ १ ॥
शशासुरत्र कर्णाटे ताञ्जित्वा जयसिंहकः ।
चालुक्यः स्वीयराज्यं च चकार रिपुसूदनः ॥ २ ॥
चालुक्यास्ते खबाणद्विवर्षाद्राज्यं प्रचक्रिरे ।
तेषु द्वौ पुलिकेशाख्यौ महाशूरौ बभूवतुः ॥ ३ ॥
राजधानी तु बादामी चालुक्यानां तदा ह्यभूत् ।
जितं कर्णाटपूर्वार्धमाद्येन पुलिकेशिना ॥ ४ ॥
~~~

सर्वाङ्गिजत्वाश्वमेधाख्ययज्ञं हि कृतवान् प्रभुः ।
"सत्याश्रय पृथ्वीवल्लभपुलिकेशिमहाराजः" ॥ ५ ॥
इत्यभिख्यां समासाद्य सार्वभौमो बभूव सः ।
कर्नाटकमहाराज्येऽभिषिक्तो नृपनन्दनः ॥ ६ ॥
दुर्गाकाशरसे वर्षे पुलिकेश्यपरो नृपः ।
द्वाविंशद्वयवर्षाणि स्वीयं राज्यं शशास सः ॥ ७ ॥
काले माण्डलिका एत्य तेन युद्धे पलायिताः ।
तेनैव जलयानार्थं नावो नानाविधाः कृताः ॥ ८ ॥
मालवो गुजराथश्च कालिंगः पाण्ड्यचोलकौ ।
एते चान्ये च बहवस्तदधीना महीभृतः ॥ ९ ॥
तदोत्तरे भारते श्रीहर्षो नाम महाप्रभुः ।
दक्षिणं भारतं सर्वं जेतुकामः प्रतापवान् ॥१०॥
द्वितीयपुलिकेश्याख्यो ज्ञात्वैतत्सैन्यसंयुतः ।
नर्मदातीरमागत्य हर्षं तत्र रुरोध ह ॥११॥
सङ्ग्रामे तुमुले जाते हर्षराजा पलायितः ।
उत्तरं भारतं वर्षं चालुक्यानां बभूव ह ॥१२॥
एतेन पुलिकेश्याख्यं शशंसुः परमेश्वरम् ।
ततस्तस्य कुले जाताः परमेश्वरसञ्ज्ञिताः ॥१३॥
तस्मिन्काले हि कर्णाटशिखरः कीर्तिरूपकः ।
सर्वत्रौन्नत्यमापन्नः परमेश्वरसञ्ज्ञिना ॥१४॥
तच्छ्रुत्वैराणराजोपि मैत्रीं तेन चकार ह ।
कर्णाटं प्रहितस्तेन प्राड्विवाको महामतिः ॥१५॥
पुलिकेशेः प्राड्विवाक इराणं प्रति जग्मिवान् ।
अनेन कृत्वा स्वे राज्ये भागान् तेषु पृथक् पृथक् ॥१६॥
स्थापिता भ्रातरः पुत्रास्तत्र तत्र महाबलाः ॥
गुजराथे तथा वंगप्रान्ते राज्यद्वयं कृतम् ॥१७॥



"प्रजातंत्र का अर्थ मैं यह समझता हूँ कि इसमें नीचे से नीचे और ऊंचे से ऊंचे आदमी को आगे बढने का समान अवसर मिले।"

महात्मा गांधी

"हम समाजवादियों के सामने आर्थिक स्वतंत्रता का मानी एक शब्द ये है "समाजवाद" के बिना आर्थिक स्वतंत्रता धोके की टट्टी साबित होगी। झूंठी कल्पना सिद्ध होगी।"

—जयप्रकाशनारायण

"समाजवाद की बुनियाद, संभव बराबरी, छोटी मशीनें, सामाजिक मिल्कियत, चौखम्भा राज्य और शिवराज्य इन सिद्धान्तों पर निर्भर है और वह अपने अवसर संभव हो तो मत द्वारा, आवश्यक हो तो शान्तिपूर्ण संघर्ष द्वारा और सर्वत्र रचनात्मक कार्य द्वारा हासिल करना चाहता है।

—डा० लोहिया

"राजस्थान में 2 अक्टूबर से प्रारम्भ अन्त्योदय योजना तथा राजस्व अभियान महात्मा गांधी की परिकल्पना के अनुरूप दरिद्रनारायण के उत्थान एवं उनकी सेवा के कार्यक्रम हैं।"

भैरोंसिंह शेखावत,
मुख्यमंत्री

---

राजस्थान सरकार द्वारा प्रसारित

सेठी/28-10-77

# देशवार्ता:-

श्रीपद्मशास्त्री
मांडलगढ़:

## अमृत-महोत्सवः (श्रीजयप्रकाशनारायणस्याभिनन्दनम्)

प्रतिक्षणं मृत्युना संघर्षं कुर्वता लोकनायकेन श्रीजयप्रकाशनारायणेन भारतस्य पंगुभूतं लोकतन्त्रं नवजीवनेनालंकृत्य विश्वस्मिन्नद्वितीयमुदाहरणं प्रस्तुतम् । क्षणविध्वंसि जीवनं येन निश्चयेन स जीवति तस्य स्रोतांसि तु प्रबलेच्छाशक्तिरदम्यश्चात्मविश्वासस्तथा प्रखरराष्ट्रभक्तिरेव वर्तते ।

मार्क्सवादात्सर्वोदयं यावत्सर्वोदयात्सम्पूर्णक्रान्तिपर्यन्तं तेषां जीवनस्यानुभूतचिन्तनप्रक्रिया सम्प्रति शाश्वतजीवनमूल्यानां पथप्रदर्शिका सञ्जाता ।

असहयोगरूपेण प्रचालिते विहारप्रान्तस्यान्दोलने हिंसया विरतेनानुशासनेन दृप्तोऽवलोऽपि नवयुवकवर्गश्शान्तिपथाऽनुगम्यमानः कश्चिन्नूतनस्येतिहास्य सूत्रपातं विधाय भारतीयराजनीत्यामामूलचूलंपरिवर्तनमकरोत् । यद्यपि राजनैतिकं परिवर्तनन्तु सम्पूर्णक्रान्तेरेकं सोपानमेव भवितुमर्हति न तु लक्ष्यम् । वस्तुतो लोकनायककृतायाः समग्रक्रान्तेः सम्यग्मूल्यांकनं तावत्कर्तुं न्न शक्यते यावद्भारतीयसमाजे वैषम्यं पार्थक्यञ्च दरीदृश्यते ।

सम्पूर्णराष्ट्रचिन्तनस्य नूतनायामप्रदायिने लोकोपकारविधायिने लोकनायकाय भूयो भूयः प्रणामा विलसन्तु ।

शुभेऽस्मिन्नमृतमहोत्सवपर्वणि भारती-परिवारः पौनःपुन्येन लोकनायकस्याभिनन्दनं कुर्वन् सर्वशक्तिसम्पन्नं परमेश्वरं प्रार्थयते यत्तेषामलौकिकी शक्तिर्भूयोऽपि लोककल्याणाय प्रवर्तताम् ।

### श्रीदीनदयाल-जयन्ती-समारोहः

विगतमासे समस्तराष्ट्रे ह्यनासक्तकर्मयोगिनां दिवंगतानामुपाध्यायमहाभागानां जयन्तीसमारोहाः समायोजिताः ।

निर्धनपरिवारे समुत्पन्नोऽयं मेधावी युवकः स्वच्छात्रजीवनादेव राष्ट्रियस्वयंसेवकसंघस्य सदस्यः प्रान्तप्रचारकश्च समजनि ।

प्रकृतिमेधावित्वादयं निर्धनानां साहाय्येन ह्यल्पमतीनाञ्च मार्गदर्शनेन भारतीय-

जनजीवनस्य बहूपकारं कृतवान्। सततमध्ययनशीलः प्रकृत्या नितरां दयालुरसौ दीनदयालुः प्रबुद्धो विचारको यशस्वी पत्रकारश्चास्ते । स्वव्यस्तजीवनेऽपि विशृङ्खलितभारतीयसमाज-स्योत्थानाय बहूनि ग्रन्थरत्नानि जग्रन्थ, पत्रकारिताजगति नूतनानि कीर्तिमानानि स्थापितानि । तेषां विलोभनीयं व्यक्तित्वं ह्यल्पेनैव कालेन समस्तं भारतमतिचक्राम । डा० श्यामाप्रसादमुकर्जिमहोदयानामाग्रहेण पश्चात्स भारतीयजनसंघस्य सदस्यतां प्रतिजग्राह । स्वोदारगुणगणैरलंकृतोऽयं स्वल्पायुषि जनसंघस्य महामन्त्रिपदमलभत । तेषां कुशलनेतृत्वे जनसंघस्य संघटनात्मकं स्वरूपमुत्तरोत्तरं प्रगतिं प्रचक्रे ।

तेषां चिन्तनस्य निष्कर्षस्तु, यत्कस्यापि पाश्चात्यदेशानुकरणेन नास्माकं समुन्नतिः कदापि भवितुमर्हति । भारतीयतत्त्वज्ञानमधिकृत्य कश्चिन्नूतनविचारधारयैव भारतीय-राष्ट्रवादस्य विकासः कर्तुं शक्यते ।

## शिया-सुन्नीविवादः—

विगतवर्षेषु भारते हिन्दु-मुस्लिमसौहार्दस्य स्वरूपमवलोक्य प्रसन्नता सञ्जाता परं सितम्बरमासस्य २८ तारिकायां लखनउ-कानपुरनगरे द्वयोर्मुस्लिमसम्प्रदाययोर्मध्ये पुरातनधार्मिकविवादमधिकृत्य हिंसका संघर्षः समजनि, यस्मिन् त्रयोदश जना मृताः शतशश्च क्षतविक्षता अभवन् शान्तिस्थापनार्थं सेनायाः साहाय्यमधिगृहीतम् ।

अल्पसंख्यकानां हितसंरक्षणस्य नाम्ना केचनावसरवादिनो विरोधिनः साम्प्रदायिकवैमनस्यमुत्पाद्य चाग्नावुद्वलज्जलं पातयितुं चेष्टमानास्तुच्छं राजनैतिकं स्वार्थमधिग्रहीतुं प्रयतन्ते ।

१९७४ तमे वर्षे कांग्रेससर्वकारेण द्वयोः सम्प्रदाययोः शोभायात्रासु प्रतिबन्धः स्थापितः । सम्प्रति ह्यपावृते प्रतिबन्धे शिया-सुन्नीसम्प्रदाययोर्विभक्ता मुस्लिमा द्वादशशत-वर्षपूर्वघटितां कर्बलायुद्धस्य घटनां संस्मृत्य पुनर्द्वन्द्वयुद्धमकुरुताम् । स्वार्थलोलुपा विरोधिनो विभक्तमुस्लिमसम्प्रदायानां स्वराजनैतिकस्वार्थाय दुरुपयोगं न कुर्युः, एतदर्थं भारतस्य प्रबुद्धो मुस्लिमवर्गः स्वयमेव भीषणामिमां समस्यां समाधातुं शक्नोतीति नान्यः कोऽपि ।

## इन्दिरा-निग्रहणम्, विमुक्तिश्च—

अक्टूबरमासस्य ३ तारिकायां भारतस्य भूतपूर्वप्रधानमन्त्रिणो निग्रहणसमाचारं

श्रुत्वा नाश्चर्यचकितो लोकः, यतो हि श्रीमती गान्धिमहोदया ७० मृत्तराणि क्रीत्वा, स्वदलस्य कृते ८ कोटिरूप्यकाणामनुबन्धं विधाय स्वपदस्य दुरुपयोगं कृतवतीति तस्यां मुख्याभियोगाः समारोपिता गुप्तचरविभागेन ।

यद्यपि श्रीमतीगान्धिमहोदया स्वनिग्रहणं राजनीतिप्रेरितमकथयत् परं गृहमन्त्रिणा स्पष्टं निगदितं यत्संविधानदृशा न कोऽपि दण्डभागदण्डितस्तिष्ठेदिति विचार्य शासनेन सामान्यनागरिकवत्तस्यामभियोगः प्रचालितो न प्रतिशोधात्मकभावनया । इन्दिरानिग्रहणविरोधे स्थाने स्थाने समायोजितानां प्रदर्शनानां स भर्त्सनामकरोत् । "केन्द्रिय जाँच ब्यूरो" द्वारा प्रस्तुतप्रमाणाभावे न्यायालयेन सा निर्मुक्ता । जनतासर्वकारस्तद्विरुद्धं तत्क्षणमेवोच्चतमन्यायालये याचिकां प्रास्तौत् ।



# आयुर्वेद-स्तम्भः–

## योगायुर्वेदयोः संयोगः

वैद्यश्रीप्रभुदत्तशास्त्री, भिषगाचार्यः

पूर्वाऽनुवृत्तम् —

सुखदुःखात्मिकानाम्वेदनानामधिष्ठानम्–केशलोमनखाग्रान्नमलद्रवगुणैर्विना मनोदेहश्च सेन्द्रियः–इति प्रकटितम् । शारीरा रोगाः वेदनाश्च पूर्वं देहे जायन्ते तदनन्तरं मनसि-प्रादुर्भवन्ति । मानसाश्च विकाराः प्राक् मनसि समुद्भूय पश्चात्—शरीरं परिभावयन्ति । इति परस्परं नित्यसंयोगित्वाद्वेदनामुत्पत्ति-रुभयोः सञ्चरति ।

यो हि भगवान् शेषावतारः मुनिप्रवरः पतञ्जलिः योगेन चित्तस्य, पदेन वाचां दोषान् दूरीकृतवान् स एव चरकमहर्षिनाम्ना वैद्यक-शास्त्रस्य—आधारत्वेन प्रतिष्ठितायाश्चरक-संहितायाः प्रतिसंस्कारमपि विहितवान् । तेनैवायुर्वेदस्य प्रयोजनद्वयमभिहितम् "स्वस्थ-स्य स्वास्थ्यरक्षणमातुरस्य विकारप्रशमन-ञ्चेति" ।

योगशास्त्रे यथा आत्यन्तिकी दुःखनि-वृत्तिरुपपादिता सैवायुर्वेदे नैष्ठिकी चिकित्सा कथिता । सात्र चिकित्सा तु नैष्ठिकी या विनोपधाम् इत्यभिधाय-उपधायाः प्रवृत्तिहेतु-त्वमपिप्रदर्शितम् "उपधा ( तृष्णा ) हि परो हेतुः—दुःखदुःखाश्रयप्रदः ।" इत्यादिभि-र्वचनैः ।

'सत्यवादिनमक्रोधं निवृत्तं मद्यमैथुनात् ।
अहिंसकमनायास प्रशान्तं प्रियवादिनम् ।।

जपशौचपरं धीरं दाननित्यं तपस्विनम् ।
देवगोब्राह्मणाचार्यगुरुवृद्धार्चने रतम् ।।

आनृशंस्यपरं नित्यं, नित्यं करुणवेदिनम् ।
समजागरणस्वप्नं, नित्यं क्षीरघृताशिनम् ।।

देशकालप्रमाणज्ञं युक्तिजमनहङ्कृतम् ।
शस्ताचारमसङ्कीर्णमध्यात्मप्रवणेन्द्रियम् ।।

उपासितारं वृद्धानामास्तिकानां जितात्मनाम् ।
धर्मशास्त्रपरं विद्यान्नरं नित्यरसायनम् ।।"

इत्यादिवचनैरुपधानाशकत्वेन आचाररसा-यनस्य अभिधानं कृतम् । येन सत्वरमेव शारी-रमानसदोषनिवृत्तिर्भवति । योगशास्त्रोक्ता यमनियमादयोऽपि एतस्मान्नित्यसेवनीयाद् रसायनाद् भिन्नाः न सन्ति ।

योगशास्त्रे हि आसन-प्राणायामयोर्महत्त्वं विशेषतो दृश्यते तथैवायुर्वेदे स्वस्थवृत्ते दिन-

चर्यानिशाचर्या-ऋतुचर्याणां वर्णनं महत्त्वपूर्ण-मस्ति ।

योगविद्भिः प्राणायामात् पूर्वं नेति-धौति-बस्ति-न्यौली-कपालभाति-त्राटकनाम्ना षट्कर्मणां कफादिदोषनिर्हरणार्थं विवेचनं कृतम्, तथैव-आयुर्वेदेऽपि शरीरशुद्धयर्थम् पञ्चोपायाः पञ्चकर्मत्वेन वर्णिताः सन्ति । वमनं, विरेचनं, बस्तिः, शिरोविरेचनं, रक्तमोक्षणञ्च । एभिः कफादिदोषाः समूलाः नश्यन्ति । उक्तं हि—"दोषाः कदाचित् कुप्यन्ति जिता लङ्घनपाचनैः । ये तु संशोधनैः शुद्धाः न तेषां पुनरुद्भवः ।।" शारीरदोषसंशोधनार्थं रोगोपशमनार्थञ्च चिकित्साङ्गत्वेन स्वीकृता अपि पञ्चकर्मोपाया। रसायनसेवनात् पूर्वमपि परमोपयोगिनः सन्ति । ऋतुचर्यायामपि तत्तदृतौ दोषानुसारं तत्प्रकोपशमनार्थमेते वमनविरेचनादयो विशेषतो विवेचिताः । हठयोगे हि षट्कर्मभिरपि विविधरोगाणामुपशमो दर्शितः । यथा—

"कपालशोधिनी चैव दिव्यदृष्टिप्रदायिनी ।
जत्रूर्ध्वजातरोगौघं "नेति" राशुनिहन्ति च ।।

कासश्वासप्लीहकुष्ठं कफरोगाश्च विंशतिः ।
"धौति" कर्मप्रभावेण प्रयान्त्येव न संशयः ।।

गुल्मप्लीहोदरं चाऽपि वातपित्तकफोद्भवाः ।
"बस्ति" कर्मप्रभावेण क्षीयन्ते सकलामयाः ।।

मन्दाग्निसन्दीपनपाचनादिसंधायिकानन्दकरी सदैव ।
अशेषदोषामयशोषिणी च हठक्रियामौलिरियं च "नेतिः" ।।

इत्येवं सम्पूर्णयौगिकक्रियाविषयोऽयमायुर्वेदवत् शारीरचिकित्साविषयक एवास्ति । योगशास्त्रं चिकित्साकर्मसु आयुर्वेदस्यापूरकत्वेन-सम्वर्द्धकमेव गण्यते । योगतन्त्रे प्रतिपादिताः सिद्धान्ताः स्वास्थ्यरक्षायां रोगप्रशमने च आयुर्वेदस्य वर्णित प्रयोजनेन साम्यमावहन्ति । आत्यन्तिकरोग-दोषदुःखनिवृत्तेः परमोपायाः सन्ति । शरीरेन्द्रियसत्त्वात्मसंयोगात्मकस्यायुषो वर्द्धकाः हिततमाः सुखसाधनेषु-उत्कृष्टतमाश्च वर्तन्ते । आयुर्वेदोक्ता। स्वस्थवृत्त—सद्वृत्त—पञ्चकर्म-चिकित्साविधयोऽपि तथैव प्रयोजनवन्तः सन्ति । इत्थम् पृथक्दर्शनत्वेन दर्शिताः सिद्धान्ताः— अत्यन्तं साम्यं सामीप्यञ्च परस्परं प्रकटयन्तीत्यलमतिविस्तरेण ।



# नारीस्तम्भः—

## धन्या गृहिणी गृहस्थाश्रमश्च

श्रीमती राजेश्वरीभट्टमहोदया
संस्कृतविभागे, अध्यक्षा
( लालबहादुरशास्त्री-महाविद्यालयः, जयपुरम् )

**सानन्दं सदनं सुताश्च सुधियः कान्ता न दुर्भाषिणी ।**
**सन्मित्रं सुधनं स्वयोषिति रतिश्चाज्ञापरा सेवकाः ।**
**आतिथ्यं प्रभुपूजनं प्रतिदिनं मिष्टान्नपानं गृहे ।**
**साधोः सङ्गमुपासते हि सततं धन्यो गृहस्थाश्रमः ।**

गृहस्थाश्रमस्य साफल्यं सद्गृहिण्यैव सम्पद्यते । गृहिणी गृहमुच्यते । गृहे आनन्दाः आमोदप्रमोदाश्च, पुत्राः विद्वांसः निरवद्यविद्याविद्योतितान्तःकरणाः प्रिया च मधुरभाषिणी, अनुकुलाचरणवती च । मित्राणि सन्मित्राणि, गृहं धनधान्यपरिपूर्णं, आत्मयोषिति प्रेमव्यवहारः, सेवकवर्गः आज्ञाकारकः न चोत्तरदायकः, प्रतिदिनं अतिथिसत्कारः देव-पूजनञ्च तथा च मिष्ठान्नपानादिकं सुस्वादु भोजनं, साधूनां सत्संगतिश्चेति सर्वमेव गृहस्थाश्रमे समुपलभ्यते । अतः गृहस्थाश्रमः धन्यः प्रशस्यश्च ।

गृहास्थाश्रम की सफलता गृहिणी पर आधारित रहती है । वही गृहस्थजीवन के सुख–आनन्द आदि का मूल कारण है । घर में आमोद प्रमोद तथा आनन्द, पुत्र, विद्वान् एवं व्यवहार कुशल, प्रिय पत्नी सदा मधुरभाषिणी, अच्छे एवं सहायक मित्र, पुष्कल धन, अपनी पत्नी के प्रति प्रेम, आज्ञाकारी सेवक वर्ग, प्रतिदिन अतिथियों का सत्कार, सेवा एवं शुश्रूषा तथा देवताओं की पूजा सत्कार । भोजन में सदैव मिष्ठान्न-स्वानिष्ठ भोज्य पदार्थ तथा सतत सत्पुरुषों का संगम–ये सभी गृहस्थाश्रम की विभूतियां है । अतः गृहस्था-श्रम वस्तुतः धन्य एवं श्रेयस्कर है ।



# दीपावलीमहोत्सवस्येतिवृत्तं स्वरूपं च

श्रीकलानाथशास्त्री, एम ए, साहित्याचार्यः,
निदेशकः, भाषाविभागे राजस्थानम् जयपुरम्

भारतवर्षस्य सांस्कृतिकेतिहासे कार्तिकामावास्यायां दीपावलीमहोत्सवस्य यद् वर्तमानं स्वरूपमस्ति न तद् प्राचीनम्। भारतस्य पुरातनेषु काव्यादिग्रन्थेषु भारतीया अन्यान्य उत्सवा बहोः कालाद् वर्णिता उपलभ्यन्ते किन्तु तत्र दीपावल्या अद्यतनस्य स्वरूपस्य नोल्लेखः। कालिदासहर्षादिभिः कविभिर्होलिकोत्सवस्य मदनोत्सवरूपेण काव्यमयं वर्णनं विशिष्य कृतमस्ति किन्तु दीपावल्यास्तादृक् वर्णनं न कुत्राप्युपलभ्यते। तदिदं सूचयति यदस्योत्सवस्य न तदात्वे तावद् भारतव्यापि महत्त्वमभूद् यदद्य विद्यते। यद्यपि भोजराजस्य कविकण्ठाभरणादि—ग्रन्थेषु प्राकृतगाथासु च दीपोत्सवस्य कस्यचन वर्णनं लोकोत्सवविधया समुपलभ्यते किन्तु कस्यां तिथौ तत् संमान्यते स्मेति न विदितम्। प्रामाणिकेषु पुरातनग्रन्थेषु तु दीपोत्सवस्य वर्णनं शरत्पूर्णायां कृतं समुपलभ्यते। कतिपयपुराणेषु दीपावल्याः स एव विधिर्वर्णित उपलभ्यते यदद्य दृश्यते किन्तु-बहुषु प्राचीनेषु पुराणेषु न तस्योल्लेखः। दीपावल्याः पुराणेषु चर्चा केवलं लक्ष्मीपूजाप्रसङ्ग एव समुपलब्धुं शक्या, किन्तु कार्तिकामायां प्राचीनपुराणेषु न कापि लक्ष्मीपूजा विहिताऽस्ति। लक्ष्म्या उत्पत्तिः पूजाविधिश्च प्रायः सर्वेषु पुराणेषु लभ्यते किन्तु तदिदं विशेषत उल्लेखनीयं यत्तेषु लक्ष्मीपूजायास्तिथयः शुक्लपक्ष एवोल्लिखिताः। कार्तिकमासेऽपि लक्ष्मीपूजनमधिकांशतः पुराणेषु न लभ्यते। स्कन्दपुराणे—

"पौषे चैत्रे तथा भाद्रे
पूजयेयुः स्त्रियः श्रियम्।
सिंहे धनुषि मीने च
स्थिते सप्ततुरङ्गमे।"

इत्युक्त्वा कार्तिके लक्ष्मीपूजायाः संभावनैव पिहिताऽस्ति। स्पष्टतश्च तदिदं विहितम्—

"प्रत्यब्दं पूजयेल्लक्ष्मीं शुक्लपक्षे गुरोर्दिने।
गुरुवारे तु पूर्णा च यत्नेन यदि लभ्यते।
तत्र पूज्या तु कमला धनपुत्रविवर्धिनी।"

इति पूर्णिमा लक्ष्मीपूजनायोपयुक्ता तिथिर्वर्णिता, नाऽमा। अमायां निषेधः—

"नापराह्णे न रात्रौ च
नासिते न त्र्यहस्पृशि।
त्रयोदश्यां तथाष्टम्यां
कमलां नैव पूजयेत्।"

इति। लक्ष्मीचरित्रेऽपि

"न कृष्णपक्षे रिक्तायां दशमीद्वादशीषु च।
श्रवणादिचतुर्ऋक्षे कमलां नैव पूजयेत्।"

इति लभ्यते । युक्तमपीदम् । पुराणेषु चन्द्रः खलु "लक्ष्मीभ्राते" त्युद्दिष्टः । अतो हि चन्द्रसत्त्व एव लक्ष्मीपूजा विहिता न तस्याभावे ।

**तान्त्रिकं महत्त्वम्—**

अवश्यमेव तन्त्रशास्त्रस्य महाविद्यास्वरूपिणी या रात्रिरुपदिष्टा तस्या उपासनायै समुचितः कालः अमाथा भवेदिति संभवम् । "कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणे"ति मार्कण्डेयपुराणे व्युपदिष्टा कालरात्रिः कार्तिकामावास्येति तान्त्रिका अभिप्रायन्ते । 'कालरात्रिर्महेशानि ताराकालीप्रियङ्करी"ति शाक्तप्रमोदे । एवं चास्यां रात्रौ तान्त्रिकोपासना प्राचीनात्कालाद् विहिता स्यात् परं दीपोद्योतादिना लक्ष्मीपूजा बहुषु प्राचीनग्रन्थेषु नोपलभ्यते । "दीपोत्सवचतुर्दश्याममया योग एव चेत् । कालरात्रिः" इति शक्तिसंगमतन्त्रीयं वाक्यं तु चतुर्दश्यां दीपोत्सवस्य सूचकत्वाल्लक्ष्मीपूजाया अमायां विधायकं न साधयितुं शक्यते । शक्तिसंगमतन्त्रस्यसमयोऽपि न भूयान् पुरातन इति शोधविदुषां मतम् । श्रीमद्भागवते गोवर्धनपूजाया विस्तृत उल्लेखोऽस्ति किन्तु दीपोत्सवसदृशस्य वर्तमानस्य महोत्सवस्य तत्र संकेतोऽपि नोपलभ्यते । विशाखदत्तविरचिते मुद्राराक्षसनाटके कौमुदीमहोत्सवसमारंभस्य सुविस्तृत उल्लेखो वर्णनं चास्ति किन्तु तत्र दीपावल्याः कार्तिकामायां जायमानस्य वा कस्यचनोत्सवस्य संकेतोऽपि नास्ति । शोधविदुषां तदिदं मतमस्ति यदीशवीयैकादशशताब्दीत पूर्वं विरचिते प्रामाणिके कस्मिन्नपि ग्रन्थे दीपावल्यास्तादृक् वर्णनं नास्ति । अनेन तदिदमनुमीयते यदस्योत्सवस्य वर्तमानं महत्त्वंस्वरूपं च इशवीयैकादशशतात्परमेव स्थापितम् ।

यद्यपि पद्मपुराण–वामन–मत्स्य–नीलमतादिपुराणेषु दीपावल्या उल्लेखो लक्ष्मीपूजाया विविधानि विधानानि च दृश्यन्ते किन्तु पुराणानां स्वरूपस्य निर्माणकालस्य च प्रामाणिकं निर्धारणं नाद्यापि संजातं, तेषु कुत्र कुत्र कानि क्षेपकानि परस्तात् संयोजितानीति च न विश्लिष्टमिति तेषां समुल्लेखेन समयसीमानिर्धारणं न सुशकमिति विदुषां सिद्धान्तः । अत एव हि ग्रन्थान्तराधारेणैव समयनिर्धारणं क्रियते । ततश्च दशम्याः शत्या उत्तरार्धे लिखितायां यशस्तिलकचम्प्वां शरत्पूर्णाया दिने दीपोत्सवस्योल्लेखः, एकादश्यां शत्यां भारते समायातेन वैदेशिकयात्रिणा अलबेरूनीत्याख्येन कार्तिकशुक्लप्रतिपदि दीपोत्सवो वर्णितः, अन्यत्रापि नागानन्दादिषु 'दीपप्रतिपदुत्सवे' इत्युल्लेखो दृश्यते– इति सर्वमिदं साधयति यत् कार्तिककृष्णामायामद्यत्वे य उत्सवः संमान्यते स पूर्वं प्रतिपदि, शरत्पूर्णादिदिवसेषु च संमान्यते स्म । विजयनगर-साम्राज्ये पञ्चदश्यां शताब्द्यां लिखितस्यैकस्य विशालस्य सन्दर्भग्रन्थस्य 'आकाशभैरव" कल्पस्यापि वर्णनमस्मिन्नेव दिने दीपोत्सवं सूचयति । एतस्मात् परं सर्वेष्वपि ग्रन्थेषु कार्तिकामायामेव दीपावल्युत्सवः

समुपलभ्यते । सप्तदश्यां शताब्द्यां लिखितेषु निर्णयसिन्धु-धर्मसिन्धु-प्रभृतिनिबन्धेषु लक्ष्मी-पूजन-दीपोत्सवादि सर्वाण्येव विधानानि तथैव समुपलभ्यन्ते यथा तान्यद्यानुष्ठीयन्ते । भविष्यपुराणेपि तदेव विधानं तथैव समुपन्यस्तमुपलभ्यते—किन्तु पुराणस्यास्य स्वरूपं समयनिर्धारणाय न प्रामाणिकं यतो ह्यस्मिन् पुराणे क्षेपकश्लोकाः अर्वाचीने समयेऽपि संयोजिता अभूवन्निति मन्यते ।

पौराणिकमान्यतानुसारं "सुखसुसिरा" सुखरात्रिर्वा सेयमभिधीयते यतो ह्यस्यामेव रात्रौ सर्वे देवा दैत्यानामत्याचारेभ्यो मुक्ता भूत्वा विष्णोर्वरमाप्य सुखेन सुषुपुः । अस्मिन् दिने सायं लक्ष्मीपूजा विहितास्ति; तस्याः स्वागतार्थं च गृहाणां स्वच्छता, सुधालेपः, गृहेषु सार्वजनिकस्थानेषु च दीपानां प्रकाशः, दीपपंक्तिदानं चेत्यादीनां महत्त्वं वर्णितमस्ति । प्राचीनादेव कालात् श्राद्धपक्षमारभ्य कार्तिकामां यावत् पितॄणां समागतानां पुनः स्वलोकेषु परावर्तनसमये मार्गदर्शनार्थं 'माकाशदीप" नाम्ना उच्चस्थानेषु दीपानां स्थापनस्य परम्पराऽभूत् । एवं च नवधान्येष्टिरूपस्य शरत्कालीनस्य वैदिकोत्सवस्य, आकाशदीपप्रथायाः, कौमुदीमहोत्सवस्य, आश्विनमासे क्रियमाणाया लक्ष्मीपूजायाश्च विविधाः परम्पराः एकीकृत्य एकादश्यां शताब्द्यां दीपोत्सवस्य वर्तमानं स्वरूपं कदाचिदुद्गतं स्यादिति मदीयानुभाः ।

**व्यापारिणामुत्सवः—**

उपर्युल्लिखितानां प्रमाणानामाधारेण तदिदं वक्तुं शक्यते यत्कार्तिकामायां लक्ष्मीपूजनदीपोद्योतनादीनां वर्तमानं स्वरूपमस्योत्सवस्य ईशवीयपंचदशशताब्द्यां समुद्गतं स्यात् । तदात्वे हि भारते वाणिज्यस्य सांस्थानिकं महत्त्वं सुस्थापितमासीत् । ततः पूर्वं तु 'कृषिगोरक्षवाणिज्य' मित्यादि दिशा स्थानीयं वाणिज्यमेव व्यापारिणां जीविकासाधनमासीत् । वैदेशिकव्यापारस्य ईस्ट इन्डिया कंपनीत्यादीनां स्थापनानन्तरमेवात्र विकास। समजनि, मुद्राया महत्त्वमेधितम् । तदनन्तरं भारतस्य पश्चिमप्रदेशेषूत्सवस्यास्य महत्त्वमप्यवर्धत । अस्मिन्नुत्सवे यल्लक्ष्म्याः स्वरूपमस्ति तदपि वैदिकदेव्याः स्वरूपं नास्ति, अपि तु धनदेव्याः स्वरूपमस्ति । अत एवास्मिन् दिने कुबेरस्यापि पूजा क्रियते । "सुखरात्र्यां प्रदोषे तु कुबेरं पूजयन्ति ये" इति रुद्रधरः । भविष्यपुराणेपि "वस्त्रैः पुष्पैः शोभितव्याः क्रयविक्रयभूमयः" इत्युक्त्वा क्रयविक्रयभूमिष्वस्योत्सवस्य विशिष्य महत्त्वं साधितम् । अद्य हि धनपतयो मध्यरात्रौ स्वमंजूषास्थ-रजतमुद्राणां-पत्र ( करेंसी-नोट ) मुद्राणां चापि यां पूजां विदधति सापि सूचयति यल्लक्ष्मीपूजा अद्यतनी धनस्यैव पूजास्ति ।

भारतीयपरम्परानुसारमस्य देशस्योत्सवसमुदायो होलिकोत्सवाद् वसन्ततौ समार-

म्यते—दीपोत्सवे शरदृतौ च समाप्तिमेति। अस्य प्रदेशस्य शीतप्रधानत्वादुत्सवाः शीततौं नाभवन्। शरदि यः शरत्संपातो भवति यश्च आङ्ग्लभाषायां "आटम्नल एक्विनाक्स" इत्युच्यते, तस्मिन् सूर्यो विषुवरेखोपरि समागच्छति—ऋतुश्च सुरम्यो भवति। तदनन्तरं सूर्यो दक्षिणं प्रति संक्रामते येन हि विषुवरेखात उत्तरा। प्रदेशाः शीतेनाक्राम्यन्ते। एवमेव होलिकोत्सवसमीपे—वसन्तसंपातस्य समयः समागच्छति यो हि पाश्चात्यैः 'वर्नल शेक्विनोक्स' इत्युच्यते। तदापि सूर्यो विषुवरेखोपरि भवति, तदनन्तरं चोत्तरं प्रति संक्रमते येनोत्तरप्रदेशेषु शीतं समाप्यते—एवं चोत्सवाः प्रारभ्यन्ते। अतः खलु प्राचीनेसमये शरत्पूर्णायामेव सुबहु शीतं तेषु प्रदेशेष्वभवद् यत्रार्या न्यवात्सुः। यदा ते उष्णतरेषु प्रदेशेषु समायातास्तदा दीपावलीदिनेऽपि सुसह्यत्वाच्छीतस्य, तदानीमप्युत्सवाः प्रारब्धाः। एवं खलु दीपमालिका कौमुदीमहोत्सवस्योत्तराधिकारिणी भूत्वाऽवातरत्।

भारतस्योत्तरेषु पश्चिमेषु च प्रान्तेषु दीपावल्या विशेषतो महत्त्वमस्ति। दक्षिणभारते पोंगलस्याधिकं महत्त्वं न दीपावल्याः। वंगेष्वपि दुर्गापूजाया अधिकं महत्त्वम्। विजयदशम्यामेव दुर्गाविसर्जनानन्तरं तत्रोत्सवाः समाप्यन्त इव। अवश्यमेव मध्यकालीनेषु विजयनगरसाम्राज्यीयेषु ग्रन्थेषु दीपावल्युत्सववर्णतान्युपलभ्यन्ते तैश्चदेमनुमीयते यत्पुराऽस्योत्सवस्य दक्षिणवर्तिनी सीमा उत्तर कर्णाटकान् यावदभूत्।

**लक्ष्मीजयन्ती—**

तदिदमपि विदुषां विचारणीयं यद् दीपमालिका किं 'लक्ष्मीजयन्ती' अर्थात् लक्ष्म्या उत्पत्तिदिनमस्ति? यद्यपि सेयं कल्पना सुतरामर्वाचीना, प्राचीनानां हि देवानामुत्पत्तिदिनानामनुल्लेखात्। न हि वैदिकानां वरुणेन्द्रादिदेवानां जयन्तीः कश्चनसम्मानितवान्। किन्तु परस्तात्। पौराणिकावताराणां 'जयन्ती" संमाननं प्राचलत्। ततश्च लक्ष्मीजयन्तीति कैश्चन सोयमुत्सवोऽपदिष्टः। कोऽत्राधारो भवेदिति न सुविदितं किन्तु विदुषां विनोदायात्रैकमाधारं प्रस्तौमि।

लक्ष्मीः, चन्द्रमाः, ऐरावतः, उच्चैःश्रवा इत्यादीनि चतुर्दश रत्नानि समुद्रमंथनतः समुत्पन्नानीति पुराणानां मान्यता। समुद्रमन्थनस्य च का तिथिरभूदिति न सूचितमस्ति तत्र। किन्तु सेयं कल्पना कथमुद्‌भूता स्यादित्यत्रैकमनुमानमस्ति। समुद्रेषु वेलोत्प्लवः (ज्वार, tides) तदा तीव्रतरो भवति यदा चन्द्रा पृथ्वीतो निकटतमो भवति, इदं हि पाश्चात्यैः 'द पेरिजी आव द मून' इत्युच्यते। इयं हि निकटतमता बसन्तसम्पातशरत्संपातयोरेव समये समागच्छति। एवं हि सूर्यस्य विषुवरेखोपरि संक्रमणे अर्थात् शरद्वसन्तयोः (मार्चमासे सितम्बरमासे च) समुद्रेषु उच्चवेलोत्प्लवा भवन्ति। उत्प्लवा अपि द्विविधा उच्चोत्प्लवाः अप्लवाश्च (स्प्रिग टाइड अथवा उच्च ज्वार तथा नीपटाइड अथवा

निम्न ज्वार)। एतेषां उच्चोत्प्लवास्तीव्रतरा भवन्ति ये अमायां संभवन्ति। तदा हि सूर्याचन्द्रमसोरेकदिशास्थत्वाद् द्वयोरपि संमिलिताऽऽकर्षणशक्तिः समुद्रजलमुत्थापयति। आश्विनकृष्णामायां कार्तिकामायां च समागच्छन्त उत्प्लवास्तीव्रा भवन्ति। तदा हि समुद्रीयो जलक्षोभः समुद्रमन्थनस्यैव दृश्यमुपस्थापयति। ततोह्यपरस्मिन् दिने समुदीयमानस्य द्वितीयाचन्द्रस्य समुद्रमन्थनोत्थत्वमपि सहसैवानुमातुं शक्यते। इदं सुसंभवं यल्लक्ष्म्याः समुद्रमन्थनोद्भवत्वेन कार्तिकामायाश्च समुद्रक्षोभस्य तीव्रतरत्वेन तस्मिन्नेव दिने तस्याः समुत्पत्तिरनुमिता स्यात्। समुद्रपारीयव्यापारस्य स्थापनानन्तरमेव भारते लक्ष्म्या नृत्यं तीव्रतरं संजातमित्यपि सुविदितमेव।

### उत्सवसमुदायः

जैनसंस्कृतौ दीपावल्युत्सवस्य परंपरा प्राचीनतरा। महावीरनिर्वाणदिवसत्वात् कार्तिकामाया अपरस्मिन्नेव दिने जैनानां नूतनसंवत्सर आरभ्यते। "कल्पसूत्रे" समुल्लेखोऽयं समुपलभ्यते यद् "वीरनिर्वाणकारणाद् यदन्तर्ज्योतिर्विलीनं तस्य क्षतिपूरणार्थं वयं परः-सहस्रम् अन्तर्ज्योतिषां दीपान् ज्वालयिष्यामः" इत्यादि। भारते बहूनां प्रान्तानां व्यापारसंस्थानानां वित्तीयवर्षो दीपावल्या अनन्तरमेव समारभ्यते स्म, तदैव मसीपात्रादि-पूजनं बही-खातादीनां नवीकरणं च क्रियते स्म। तदिदं जैनपरम्परा-प्रभावादेव समभूद् यतो जैना व्यापारे प्रमुखा अभूवन्। महर्षेर्दयानन्दस्य निर्वाणदिवसोऽप्ययमेवेति गतशताब्दीतोऽस्य महत्त्वमार्यसामाजिकानामन्येषां च कृते सुतरां समेधितम्। यस्त्वयं प्रवादः सर्वत्र प्रसृतो यद्रामस्य रावणोपरि विजयस्यानन्तरमयोध्यायां समागमनोपलक्ष्येऽयोध्यावासिभिर्दीपाः प्रज्वालिता अभूवन्नतः सोयमुत्सवः समान्यत इति; तस्य तु मूलं मृग्यमेव। मया तु कुत्राप्येतस्य समुल्लेखः पुराणेषु वा धर्मशास्त्रेषु वाऽन्यत्र वा न प्राप्तः।

दीपमालिका निमित्तका उत्सवाः कार्तिककृष्णाद्वादशीत एवारभ्यन्ते। तस्यां तिथौ गोवत्सादीनां पूजा भवति या कृषिप्रधानाया अस्मत्संस्कृतेः प्रतीकम्। गोवत्सद्वादशीति नामास्याः। यमत्रयोदशी अपरस्मिन् दिने भवति यदाऽर्धरात्रौ यमाय दीपदानं क्रियतेऽकालमृत्युनिवारणार्थं प्रार्थना च शीतप्रधानेषु स्थलेषु शीतकालस्य मारकत्वनिवारणार्थमेतदनुष्ठानं भवेदित्यनुमीयते। अपरस्मिन् दिने नरकचतुर्दशी भगवता नरकासुरसंहारोपलक्ष्ये समान्यते किन्तु तस्याः सामाजिकमहत्त्वमस्ति—वर्षासु समागतानां शारीरिक-आवासीयादिविविध-मलानामपनोदनं, गृहादीनां, संमार्जनं साभ्यङ्गं स्नानं च कृत्वा स्वच्छतायाः स्वास्थ्यस्य च पुनः स्थापनरूपेण। अत एव अपामार्गादीनां त्वक्स्वास्थ्यकराणां स्वच्छीकारकपदार्थानां चापि प्रयोगोऽत्र विहितः। अत्रैव दिने यमतर्पणमपि विधीयते। अमायां दर्शश्राद्ध-देवपूजादीनां विधानं त्वस्त्येव, सायंकाले लक्ष्मीपूजा-दीपदान-दिवा-

व्रत-रात्रिभोजनादीनामपि विधानमस्ति। मध्यकालीनैका प्रथाप्यस्मिन् दिने समाद्रियते। रात्रौ पात्रादिवादनद्वारा ग्रलक्ष्मीर्गृहिणीभिर्गृहेभ्यो बहिर्निःसार्यते बहुषु प्रान्तेषु।

दीपावल्या अपरस्मिन् दिनेऽनेके उत्सवाः संमान्यन्ते। श्रीमद्भागवते कृष्णेन इन्द्रपूजायाः खण्डनं कृत्वा गोवर्धनपूजाया महत्त्वं साधितमस्ति यद्धि सामन्तोचितपरम्पराया विरोधे कृषकाणां जनतान्त्रिकपरम्पराया महत्त्वस्थापनस्य प्रतीकमस्ति। अतोऽस्मिन् दिने तस्यैव स्मृतिं संमानयितुं गोवर्धनपूजा विधीयते, विशेषतो वैष्णवमन्दिरेषु। अस्मिन्नेव दिने बलिराजपूजाऽपि क्रियते। त्रैलोक्य विजयी बलिर्बामनस्वरूपाय विष्णवे त्रैलोक्यस्य दानं कृत्वा चिराय स्मरणीयः संजातः। एतद्विषये बह्व्यः कथाः सुप्रचलिता इति नाधिकं पल्लवनस्यावश्यकता; अस्मिन् दिने "मार्गपाली" ति नाम्ना रज्जुनिर्मिता 'बन्दनमालिका' सार्वजनिकस्थले, राजद्वारे वोच्चैः संस्थाप्यते—तदधस्तात्सामन्ता, राजवर्गीयाश्च; सामान्यजनाश्चैकत्रीभूय विपरीतमुखाभ्यां तस्या आकर्षणं कुर्वन्ति। रज्ज्वाकर्षण–( Tug of war ) स्यैव सेयंक्रीडा दृष्टिकाकर्षणस्य मध्यकालिकी परंपरा प्रतिभाति। अत्र सामान्यजनानां विजयो भवति चेत्तच्छुभं शकुनं गण्यते। "तत्र हीनजातिजये राजजयः" इति धर्मनिबन्धा; अस्मिन् दिने उच्चाधिकारिणां गृहेषु गमनस्य, शुभाकाङ्क्षाणामादानप्रदानादीनां या परम्पराऽऽस्ति साऽस्या एव सामन्तकालीनपरम्परायाः प्रभावो भवेदिति सुशकमनुमातुम्; एतस्याः परम्पराया अपरमेकं स्वरूपं महाराष्ट्रेषु "गोविन्दा आला रे" इति गीतिमवलम्ब्य प्रचलितं यत्र हि सार्वजनिके कस्मिंश्चित् स्थाने किंचन स्थाल्यादिकं वस्तु (श्रीकृष्णस्य नवनीतस्थाली चोरणप्रतीकत्वेन) अत्युच्चैर्लम्ब्यते, "गोविन्दा आला रे" इति गीतिं गायन्तो युवकाः निःश्रेण्यादि यान्त्रिकसाहाय्यं विनैव परस्परोपर्यारुह्य तस्या स्थाल्या अवतारणं कुर्वन्ति, शौर्यस्य चेदं प्रतीकं परिगण्यते। अपरस्मिन् दिवसे यमद्वितीया संमान्यते; इदं हि प्रसेधितमस्ति—यदस्यां तिथौ स्वयं यमराजः स्वभगिन्या यमुनाया गृहे भोक्तुमागच्छति। अत एव "भ्रातृद्वितीया" इति नाम्ना सेयमुत्तरे भारते संमान्यते; अस्मिन् दिने भ्रातरः स्वभगिनीनां गृहेषु भोक्तुं गच्छन्ति, ताश्च दक्षिणादिभिः सत्क्रियन्ते तैः।

एवं हि प्रायः साप्ताहिकः सोयमुत्सवसमुदायो दीपावल्या महत्त्वं साधयति। अद्यत्वे तूत्सवोऽयं भारतस्य प्रमुखो महोत्सवः संजातोऽस्ति। वर्षस्य प्रमुखस्योत्सवद्वयस्य ( होलिका, दीपमालिका चेति ) एकतरत्वेनास्य महत्त्वं समग्रेऽपि देशे प्रसृतमस्ति।



# भ्रातृद्वितीयायाः लोककथा

श्रीमती माधुरी शास्त्री

**उत्तरप्रदेशस्य लोकांचलेषु यमद्वितीयोपरि भगिन्यः कथामेकां वर्णयित्वा भ्रातृद्वितीयायाः पूजनं गोमयोपलिप्ताङ्गणे कुर्वन्ति, लोककथा सात्र संक्षिप्योद्ध्रियते ।**

कस्मिश्चिल्-नगरे देवदासनामक। एकः भूदेवस्य पुत्र। निवसति स्म, तस्य मातुः देहान्तो बाल्यकाले एवाभवत् ।

जनकः शिशोः परिचर्यार्थम् किंचित्कालानन्तरम् पुनर्विवाहमकरोत् ।

किन्तु विमाता देवदासाय स्नेहं नाकरोत् । सदैव तस्याहितमेव विचारयति स्म । देवदासोऽपि मातुः दुर्व्यवहारेण पूर्णरूपेण परिचितः आसीत् ।

अस्य विषयस्य कस्यापि चर्चां विरोधवार्तां वापि नाकरोत् । समये गते देवदासो वयस्को बभूव । देवदासस्य विवाहोप्यभवत् । विमाता पुत्रपत्न्यै कृत्रिमं प्रेम प्रदर्शयति स्म । वराकी बधूःश्वश्र्वा कृत्रिमं स्नेहं वास्तविकम् जानाति स्म । श्वश्रूर्यथा कथयति स्म तथैवाचरति स्म तनयवधूः ।

एकदोक्तम् देवदासस्य जनन्या । "अयि तनये ? त्वं निजपतिं पृच्छ यत् तव प्राणः कस्मिन्स्थाने वसति "। वधूरपि स्वस्वामिनं तदपृच्छत् ।

देवदासस्य प्रतीतमभवत् यत् प्रश्नोऽयं विमातुर्जनन्या एव । पुनःपुनः तामेव वार्तां पृच्छन्त्यै पत्न्यै देवदासेन भणितम् । "पश्य त्वमधिकम् हठं माकुरु । यद्यहं भेदं कथयिष्यामि तर्हि तवातीवाहितं भविष्यति ।

इयत्कथनोपर्यपि यदा वधूर्न समाहिता तर्हि देवदासेन कथितम् ।

"पश्य यदि मम किमपि भवेत् तर्हि समीपस्थग्रामे या ममैका धर्मसहोदरा निवसति तां त्वरितमेव सूचनां दद्याः । तदा देवदासेन स्वप्राणस्य रहस्यम् कथितम् । मम प्राणाः गृहपृष्ठवर्तिलतायां निवसन्ति ।

तत्क्षणमेव बधूस्तत्र गत्वा विमातरम्प्रति-उक्तवती । हेऽम्ब ! तस्य प्राणाः तु गृहपृष्ठवर्तिलतायां निवसन्ति । श्रुतमात्र एव विमातुश्चित्तं प्रसन्नमभूत् । तदा रात्रौ शुष्क तृणसंग्रहं कृत्वा सा तस्याः लतायाश्चतुर्दिक् धृत्वाग्निं प्राददत् । यदा लता धू धू रितिकृत्वा प्रज्व-

लिता तदा देवदासोऽपि कान्तिहीनो भूत्वा खंडितवृक्षवत् बभूव। यदा पुत्रवधूस्तदिदमपश्यत् सातीव खिन्ना जाता। झटिति सा स्वपत्युर्धर्मभगिन्या गृहं गता।

धर्मभगिनी तदापृच्छत् सर्वं वृत्तान्तम्। तदा देवदासस्य जायापि समस्तां घटनां पूर्वक्रमतो न्यवेदयत्।

तदा धर्मसहोदरापि द्रुतं दधिदुग्धानां भाण्डानि नीत्वा शकटोपरि धृत्वा च तत् स्थानं प्रति प्रस्थिता। तत्क्षण एव दग्धस्थानोपरि दधिदुग्धकलशैः सा सेचनमकरोत्।

पावकस्य शमने सति भ्रातुरपि चेतना पूर्ववत् समागता।

सकुशलं भ्रातरं दृष्ट्वा भगिनी प्रेमाश्रुपूरिता। विह्वला भूत्वाकथयत् भ्रातः न कदापि स्वरहस्यं प्रकटनीयम्।

"अस्तु यद् भाव्यं तत् को निवारयति" तदा भ्रातुः मंगलकामनया सह तद्दिने विधिविधानतः यमद्वितीयाया। पूजनम् सर्वैः कृतम्। भ्रातुः दीर्घायुःकामनया भाले तिलकं कृत्वा तथा नीराजनमपि कृत्वा समारोहः समापितः।

तद् दिनं कार्तिकमासस्य शुक्लपक्षस्य द्वितीयाः दिनमासीत् तद्दिवसात् भ्रातृद्वितीयाया। पूजनस्य विधानं प्रारब्धम्।

अद्यापि भगिन्यः दधिदुग्धस्याभिषेकं कृत्वा भ्रातृणाम् मंगलम् वांछन्ति-आशिषश्च प्रददति-शुभम्—



# विश्व-वार्ताः—

## संयुक्तराष्ट्रसंघमंचे हिन्दीभाषणम्

श्रीकलानाथशास्त्री, एम ए, साहित्याचार्यः,
निदेशकः, भाषाविभागे राजस्थानम् जयपुरम्

अस्य वर्षस्याक्तूबरमासस्य चतुर्थी तारिका भारतस्येतिहासे समुल्लेखनीया स्थास्यति यतोऽस्मिन् दिवसे भारतस्य विदेशमंत्रिणा श्रीअटलविहारिवाजपेयिनाऽमेरिकायां संयुक्त-राष्ट्रसंघस्य महासभायां यद् भाषणं कृतं तद् भारतस्य राष्ट्रभाषायां हिन्द्यामभूत्। संयुक्त-राष्ट्रसंघस्य कार्यकलापेषु प्रथमतः पंच भाषा एवाधिकृत—भाषात्वेन स्वीकार्या अभूवन्—आंग्लभाषा, चीनभाषा, रूसीया, फ्रांसदेशीया, स्पेनदेशीया च। कतिपयवर्षपूर्वमेव आरब्य-देशानां प्रयत्नवशात् षष्ठभाषात्वेन अरब-देशीया भाषाऽपि स्वीकृताभूत्।

तदैव खलु भारते विचारकैरयं प्रश्नः साटोपमुत्थापितो यदरबभाषायाः स्थानं तस्या भाषकाणां संख्याया अनुरोधेन विश्वभाषासु नवममस्ति, हिन्दीभाषाया भाषकाणां संख्यां दृष्ट्वा तस्याः स्थानं तृतीयमस्ति। तथापि नवमस्थानीया भाषा विश्वसंस्थामंचे स्वी-कार्याऽभवत् न तृतीयस्थानीयेति विचारणीय-मेव तत आरभ्य प्रयत्ना अभूवन् यद् हिन्दी विश्वसंस्थायामधिकृतभाषात्वेन स्थानं लभे-तेति।

संयुक्तराष्ट्रसंघस्यायं क्रियाविधिरस्ति यदधिकृतभाषासु प्रत्येकं भाषणस्यानुवाद। समकालमेव विधीयते—किन्तु अधिकृतभा-षातः इतरास्वपि विश्वभाषासु कश्चन वदेत्, तस्य लिखितं स्वरूपं, तस्यानुवादश्चापि यदि तेन पूर्वं प्रेष्यते तर्हि तस्मिन् न कापि विप्र-तिपत्तिर्भवति। अस्यां सुविधायां सत्यामपि न केनचनापि भारतीयने प्रतिनिधिना तत्र कस्यामपि भारतीयायां भाषायां भाषितम-भूत्। अक्तूबरमासे तत्र गतेन श्रीवाजपेयिना हिन्द्यां भाषणं कृत्वा सेयं श्लाघनीया पर-म्परा स्थापिताऽस्ति। साम्प्रतं विश्वसंस्था-यामस्यामधिकृतभाषात्वेन हिन्द्याः स्वीकर-णस्य मार्गः पशस्तोऽस्तीति विचारकाणां मतम्। अभिनन्दति 'भारती' श्रीवाजपेयिनं भारतीयभाषागौरवसमुज्जृम्भणेन च प्रमो-दते।



# दीपावली श्रेयसे भूयात्

डॉ० श्रीगंगाधरभट्टः
संस्कृतविभागाध्यक्षः, रा० वि० वि० जयपुरम्

उत्सवानां लोकप्रियत्वं कस्य न विदितम्। शब्दमिमं सुस्पष्टयन् कश्चन कविरेवं वर्णयति—

सव इत्युच्यते दुःखं विद्वद्भिर्मुनिपुङ्गवैः।
उद्धृतः स सवो यस्मात्तस्मादुत्सव उच्यते।

अयमाबालवृद्धं सर्वेषां चेतांसि हर्षोत्फुल्लानि विदधाति। इदमपरमुत्सवानामाकर्षकत्वं यदुत्सवस्य दिवसे सुस्वादुभोजनैः नवीनवस्त्रधारणैः चित्ताकर्षकैः शोभासंभारैः वाद्यगायनादिभिश्च प्रायशः सर्वेषां मनांसि परितुष्टानि परमानन्दविभोराणि च जायन्ते। दीपावलीमहोत्सवस्तेषां जनमानसानां परमं निर्वृतिस्थानम् मनोऽभिराम आशाबन्धश्च। परमपुनीतायाः भारतीयसंस्कृत्याः प्रतीकोऽयं महोत्सवः कार्तिकमासस्य अमावस्यां प्रतिवर्षं समागच्छति। विजयोत्सवरूपेण आर्याः उत्सवमिमं सम्मानयन्ति। विष्णुपुराणे वार्तेयं समुपलभ्यते यत् विश्वस्य विश्वस्याधिष्ठातृभूतो भगवान् नारायणः असुरैरपहृतां लक्ष्मीं पुनः प्रतिष्ठापयामास। असुरसकाशात्समुद्धृता महालक्ष्मीः प्रसन्ना सती वरं व्यतरत् यत् कार्तिककृष्णामावस्यां तिथौ यो मां पूजयिष्यति तस्मा अहं सकलवरदा भविष्यामि। वृत्तान्तेनानेनेदं निष्कृष्यते यद्यदा नारायणः स्वपिति लक्ष्मीः परैरपकृष्यते। सुप्तेषु जनेषु चौरा लुण्ठाका वा सम्पदमपहरन्ति अतस्तैः सततं जागरूकैर्भाव्यम्। आर्याणां प्रमादस्य कारणात् परैरपहृता लक्ष्मीः पुनरपि नारायणेन शत्रून् पराजित्य समानीता इति विजयोत्सवारम्भ आर्याणाम्। पुनीततरेऽस्मिन् दिवसे सायमर्धरात्रे वा विधिवत् देवीं लक्ष्मीं सम्पूज्य तस्याः सकाशे दीपमालाः प्रज्वाल्य अन्धकारममाजनितं दूरीकुर्वन्ति जनाः। जनश्रुतिरियमपि चकास्ति यत् विजयदशम्यां लङ्केश्वरस्य रावणस्य पराजयो वधश्च समजनि कार्तिक्याममायां भगवान् रामचन्द्रः स्वराज्यधुरि प्रतिष्ठितः तन्निमित्तोऽयमुत्सवः दीपदानादिना भारतस्य प्रत्येकस्मिन् कोणे समुज्जृम्भितेन समुत्साहेन जनिमद्भिः सम्मान्यते।

दीपावल्याः विषये अनेकाः कथाः प्रचलिता वेविद्यन्ते। एका कथा एवं प्रचलति यदिन्द्रेणापमानितः क्रोधमूर्तिर्दुर्वासाः शापमददात् यत्त्रिलोक्यां लक्ष्म्याः नाशः भविष्यति। लक्ष्मीः च शोभायाः सम्पदश्च प्रतीकरूपा तस्याः नाशाज्जगति महाननर्थः समजायत। लोकाः विषण्णमनसः दीना दुःखिताश्च बभूवुः। तदनन्तरं समुद्रमन्थनावसरे मक्ष्मीः

पुनरधिगता, दीपमालिका प्रज्वालनेन तस्याः अभ्यर्चना च सम्पादिता। समुद्रमन्थनोपाख्याने कथेयं विराजते।

दीपमालिकायाः अवसरे लक्ष्मीपूजायां पावनोऽयं महोत्सवः न केवलं भारतेवर्षे एव प्रत्युत विदेशेष्वपि अनुपमेनोल्लासेन सम्मान्यते। वर्मा, थाइलेण्ड, स्याम श्रीलङ्कादि-बौद्धमतावलम्बिषु देशेषु बौद्धोत्सवरूपेण उत्सवोऽयं सम्मान्यते। आचार्यराहुलसांकृत्यायनः तिब्बतदेशे दीपोत्सवस्यास्य वर्णनं कुर्वन् विलिलेख यत् समग्रोऽपि तिब्बतदेशो दीपपंक्तिभिस्तथा देदीप्यमान आसीत् यथा देवानां विवाहोत्सवस्य भव्यमायोजनं विधीयते स्म। दिवसेऽस्मिन् तिब्बतदेशात् आरभ्य कैलासमानसरोवरपर्यन्तं भवनानि देव–मन्दिराणि दीपप्रकाशेनालोकितानि व्यराजन्त। जनाः हर्षोत्फुल्ललोचनाः विकसद्धृत्पङ्कजाः समुत्सारितसकलचिन्तासन्तानाः आनन्ददोलासु दोलायितान्तःकरणाः सन्तः जीवनस्य साफल्यं भृशमनुभवन्ति चिरसुखं शान्तिञ्च समधिगच्छन्ति इति कस्याविदितम्।

आर्यधर्मः खलु अन्धसम्प्रदायान्नानुसरति। तद्वैशिष्ट्यमेव नीरक्षीरविवेकन्यायेनानुवर्तते। धर्मस्यास्य महतीयं विशिष्टता यदस्य मूले किमपि वैज्ञानिकं रहस्यमवश्यमेव वरीवर्ति। तद्धि वैज्ञानिकं रहस्यं धर्मपटेनावृतं वर्तते। धर्मप्राणा भारतीया जनाः तद्रहस्यं विस्मृतवन्तः सन्तः केवलं धर्मार्थमेव तमुत्सवं समभिनन्दन्ति। दीपावलीसन्दर्भे सामान्यतः इदमेव रहस्यं प्रतिभाति यत् वर्षासु सततं जलप्लवनेन मेघाच्छन्नतया च सूर्यस्यातपाभावेन सर्वाणि भवनानि नितरामार्द्राणि जाजायन्ते तेषु च कृमिकीटादयः समुत्पद्यन्ते तत्रत्यो वायुरपि प्रदुष्यति। रोगाणां शारदी मातेति कृत्वा नाना विषकीटादयो रोगजनका बोभूयन्ते। प्रायशः समयेऽस्मिन् वर्षर्तुः समाप्तिं गच्छति। अन्तर्भवनेषु सुखस्वापोऽयं शीतलमनोहरः समयः आव्रजति। सुखदसुरम्येऽस्मिन्नवसरे लोकः वर्षाजनितां विकृतिमपाकर्तुं स्वभवनानि पूर्णरूपेण स्वच्छानि विधत्ते सुधया धवलयति प्रतिभवनं दीपमालया प्रकाशयति च। बालाः स्फुलिङ्गवर्षकानि क्रीडनकानि प्रतिगृहं प्रज्वालयन्ति। सुधा हि कृमिकीटादीनां शातयित्री। वर्षर्तौ जाताः शरदि च जायमाना विषकीटादयः उपायैरेभिः विनाशं यान्ति। उत्सवस्यास्य वैज्ञानिकमेतन्मूलमहामन्त्रं जनानां परममुपयोग समाचरति।

दीपमालिकाया इदं पर्व पुरुषोत्तमस्य रामचन्द्रस्य विजयाभिनन्दनसमारोहः वर्तते। आर्यजातेरार्यावर्तस्य महान् विजयी नायको मर्यादापुरुषोत्तमः श्रीरामभद्रः निखिलमपि रावणकुलं विनाश्य लङ्काराज्यं विभीषणाय दत्वा चतुर्दशवर्षपरिमितात् वनप्रवासात् प्रत्यावृत्तः इति रामदर्शनोत्सुक अपारजनसमूहो न केवलं तन्नगरीमेवापितु सकलमपि आर्यावर्तदेशं दीपमालाभिरालोकितं व्यद-

धात्। नूतनाशायाः विश्वासस्य विमलः प्रकाशः सर्वासु दिक्षु प्रासरत्। रामभद्रस्य राज्याभिषेकसमारम्भः प्रावर्तत। रामस्य राज्यारोहणस्य दिवसः भारतीयेतिहासे एक उज्ज्वलमणिः। दिवसेऽस्मिन् रामराज्यस्य स्थापना समजायत। रामराज्यस्य प्रतिष्ठा विश्वराज्यव्यवस्थाया आदर्शभूता अद्यापि शासनव्यवस्थायां आदर्शत्वं प्रतिष्ठापयति। रामराज्यस्य कल्पनैव मानवमात्रं स्वकर्तव्यं प्रति मर्यादापालनं प्रति च प्रोत्साहयति।

धार्मिकदृष्ट्या अस्य उत्सवस्य परमं महत्त्वं विद्यते। श्रीमहालक्ष्मीपूजनमस्य प्रमुखमुद्देश्यम्। नानाविधैः व्यञ्जनैः पुष्पफलादिप्रायैरुपकरणैः परमया श्रद्धया निरुपमया च भक्त्या जनाः महालक्ष्मीं समर्चन्ति। केचन प्रत्यक्षदेवाः वर्तन्ते। महालक्ष्मीःचैका प्रत्यक्षदेवता या प्रत्यक्षतः जनानां साहाय्यं विदधाति। अत एव महालक्ष्मीपूजायां लोकसाधारणस्य स्वाभाविकी प्रवृत्तिरधिगम्यते।

दीपोत्सवेन एका शिक्षापि अस्माभिः स्वीकर्तव्या यत् यथा दीपो यावत् प्रज्वलति तावत् परानेवोपकरोति स्वकीयं जीवनं परेषामुपकारार्थमेव समर्पयति तथैव अस्माभिरपि स्वजीवनं समाजस्य राष्ट्रस्य च उन्नत्यै समर्पणीयम्। दीपः यथा अन्तिमतैलविन्दुपर्यन्तं निरन्तरं प्रज्वलन्नेव तिष्ठति तथैव अस्माभिरपि जीवनस्यान्तिमक्षणपर्यन्तं सज्जीवनं यापयितव्यम्। जीवने च लोकाराधनमेव प्रथमं कर्तव्यम्। मर्यादापुरुषोत्तमेन रामेण लोकाराधनस्य यद् व्रतं प्रतिष्ठापितं या च परहितसाधनता प्रवर्तिता सास्माकं जीवने दीपस्तम्भवत् मार्गदर्शिका सत्प्रेरणाप्रदा च वर्तताम्।



# यमद्वितीया

श्रीमती राजेश्वरीभट्टमहोदया
संस्कृतविभागे, अध्यक्षा
( लालबहादुरशास्त्री-महाविद्यालयः, जयपुरम् )

शरदृतौ उत्सवानां बाहुल्यं वर्तते । उत्सवप्रियो हि लोकः आश्विनशुक्लाष्टम्यां शक्तिरूपिण्याः दुर्गादेव्याः पूजा विधीयते । विजयदशम्यां रामस्य विजयोत्सवः दीपमालिकावसरे च महालक्ष्म्याः पूजोत्सवः सोल्लासं सम्मान्यते । गोवर्धनपूजया सहैव यमद्वितीया भ्रातृद्वितीया वा निखिलस्य भारतदेशस्य कोणे कोणे सम्मान्यते । उत्सवोऽयं कार्तिकशुक्लद्वितीयायां सर्वैरेव भारतवासिभिः समभिनन्द्यते । अस्माकमयं भारतवर्षं धर्मप्राणो देशः । धर्मबुद्ध्याः प्राधान्यं सर्वत्र समवलोक्यते । एवं विधानामुत्सवानां समारम्भः सकलस्यापि वर्षस्य प्रविभागेषु जनसमुदायेन सबहुमान सप्रश्रयञ्च विधीयते । सर्वे चैते-महोत्सवाः जनतायां धार्मिकभावनां संजनयन्ति । भ्रातृद्वितीया चैषा यमद्वितीयानाम्नापि अवबुध्यते । अस्य समारोहस्य विषये एका वार्ता प्रचलति यत् स्वय यमराजः दिवसेऽस्मिन् स्वभगिन्याः यमुनायाः गृहे भोजनं कृतवान् । निम्नाङ्कितोऽयं श्लोकः विषयममुं विशदयिष्यति —

भ्रातस्तवानुजाताहं
भुंक्ष्व भक्तं मयार्पितम् ।
प्रीतये यमराजस्य
यमुनाया विशेषतः ।।

श्लोकेनामुना इदमेव स्पष्टीभवति यत् यमद्वितीयायां भ्राता स्वभगिन्याः गृहे भोजनं कुर्यात् भ्राता च यावच्छक्यं धनालंकारवसनादिकं वस्तुजातं भगिन्यै प्रयच्छेत् । भविष्यपुराणमप्यमुमपि अर्थं प्रगटयति—

कार्तिके शुक्लपक्षे तु
द्वितीयायां युधिष्ठिर !
यमो यमुनया पूर्वं
भोजितः स्वगृहे स्वयम् ।।
अस्यां निजगृहे पार्थ !
न भोक्तव्यमतो बुधैः ।
यत्नेन भगिनीहस्तात्
भोक्तव्यं पुष्टिवर्धनम् ।।
दानानि च प्रदेयानि
भगिनीभ्यो विशेषतः ।
स्वर्णालङ्कारवस्त्राणि
पूजासत्कारभोजनैः ।।

अस्यायमेवाशयः यत् पुरा यमुनया स्वभ्राता यमराजः स्वगृहे समाहूय भोजितः । तद्दिनादारम्य भ्रातरः भगिन्या गृहे एव दिनेऽ-

स्मिन् भुञ्जते । प्राज्ञैः अतः स्वगृहेऽस्यां तिथौ न भोक्तव्यं भगिन्याः हस्तात् पुष्टिवर्धनं भोजनं ग्रहीतव्यम् । भगिनीभ्यः स्वर्णालङ्कारादिवस्त्रादि यथाशक्ति प्रदेयानि ।

ब्रह्मपुराणे दिवसेऽस्मिन् यमराजचित्रगुप्तयोः पूजायाः विधानं प्रतिपादितम् । लेखनीमसीपात्रयोरपि पूजा दिवसस्यास्य प्रभातकाले विधीयते । सर्वत्रैव विद्यालयेषु लेखिनीभक्तकायस्थादिजातिजनिमत्सु उत्सवोऽयं विशेषरूपेण मान्यते । पुराणेऽस्मिन् सुस्पष्टतया वर्णितं समुपलभ्यते—

या तु भोजयते नारी
भ्रातरं युग्मके तिथौ ।
अर्चयेच्चापि ताम्बूलैर्न सा
वैधव्यमाप्नुयात् ॥

भ्रातुरायुःक्षयो राजन्
न भवेत्तत्र कर्हिचित् ।
चित्रगुप्तस्य पूजा च
कुर्याज् ज्ञानविवृद्धये ।
मसीपात्रं लेखनीञ्च
सम्पूज्य च प्रयत्नतः ॥

श्लोकेष्वेतेषु धार्मिकभावनापि पूर्णतः समावेशिता । उत्सवस्यास्य धार्मिकं महत्त्वं श्लोकेष्वेतेषु प्रतिपादितं विद्यते । कार्तिकमासस्य द्वितीयायां तिथौ या नारी स्वभ्रातरं सुमधुरभोजनादिभिः भोजयेत् ताम्बूलादिभिश्च तं समर्चयेत् सा स्त्री सौभाग्यशालिनी भवेत्—कदापि सा वैधव्यं न समाप्नुयात् । महोत्सवस्यास्य फलमन्यदपि वर्तते तथा हि भ्रातापि पूर्णायुषं लभेत तस्याकालमृत्युः कदापि न स्यात् । ज्ञानविज्ञानस्य विवृद्धये चित्रगुप्तस्य पूजायाः विधानमपि कृतम् । अध्ययनाध्यापने लेखन्या मसीपात्रस्यानिवार्यता वेविद्यते । अतः तयोरपि यथाविधि सपर्या कर्तव्या ।

भारतेऽस्मिन् वर्षे पुरन्ध्रीणां प्रगल्भता सर्वविश्रुता । महत्त्वपूर्णेषु विभागेषु शिक्षावित्तप्रतिरक्षादिषु अधिष्ठातृदेव्यः भारतीयनार्य एवासन् । शिक्षायाः ज्ञानविज्ञानस्याधिष्ठात्री देवी सरस्वती, वित्तस्य धनादिसम्पदां महालक्ष्मी, शक्तेः सामर्थ्यस्य च महाकाली दुर्गादेवीति सर्वे एव जानन्ति । सर्वमेवैतत् भारते नारीणां महत्त्वपूर्णं स्थानमुद्घोषयन्ति । धर्मभावनाश्चास्मान् दुष्कर्मणः निरुन्धन्ति सुकर्मसु चास्माकमभिरुचिमुत्पादयन्ति । स्वर्गनरकयोरपि विभीषिका सत्कार्येषु जनान् प्रवर्तयितुं समुत्पादिता ।

ब्रह्मपुराणोक्तेनादेशेन भारतीयाः भ्रातरः भगिन्यश्च धर्मभावनया प्रेरिताः स्वस्वकृत्येषु प्रवृत्ता जायन्ते । श्रद्धालवो जनाः भारतीयानुत्सवान् सोल्लासं सहर्षं सानन्दं च समभिनन्दन्ति । उत्सवस्यास्य व्यावहारिकमपि महत्त्वं सुस्पष्टं वर्तते यत् भगिन्यः स्वगृहे भ्रातॄन् भोजयन्ति तेषामयमादरः परस्परं स्नेहभावनां वर्धयति, पारस्परिकीं समादरभावनाञ्च प्रवर्तयति समुत्सवोऽयम् ।

□

# संस्कृतव्याकरणप्रवेशिका

प्रधानाचार्यः श्रीविश्वनाथमिश्रः, बीकानेरः (राज०)

पूर्वाऽनुवृत्तम्—

## वर्णों के उच्चारणस्थान, प्रयत्न एवं संज्ञायें

पहले बताया जा चुका है कि स्वर और व्यञ्जन भेद से वर्ण दो प्रकार के होते हैं। वैसे तो अव्यक्त ध्वनियां पशु, पक्षी, कीट, पतंग-सभी करते हैं परन्तु मनुष्य जब अपने भाव को व्यक्त करना चाहता है तब उसके प्रयत्न से जो सार्थक ध्वनि निकलती है, उस ध्वनि की प्रथम इकाई वर्ण होता है। मुख में रहने वाले विभिन्न स्थानों में वायुसंयोग होने पर विभिन्न वर्णों का उच्चारण होता है। संस्कृत व्याकरण में वर्णों के उच्चारण के लिये सात स्थानों का उल्लेख है। वे स्थान हैं—कण्ठ, तालु, मूर्धा, दन्त, ओष्ठ और नासिका।

इन स्थानों में-अकार, कवर्ग हकार और विसर्ग का कण्ठ स्थान होता है।

इकार, चवर्ग, यकार और शकार का स्थान तालु होता है।

ऋकार टवर्ग, रकार और षकार का स्थान मूर्धा है।

लृ तु=तवर्ग-लकार और सकार-इनका स्थान दन्त है।

उकार पवर्ग, और उपाध्मानीय इनका स्थान ओष्ठ हैं।

अनुस्वार का स्थान नासिका होती है।

प्रत्येक वर्ग के पञ्चम अक्षर अर्थात् ङ ञ ण न और म इनके उच्चारण में मुख के साथ नासिका के सहयोग की भी अपेक्षा होती हैं। इसलिये ये वर्ण जिस वर्ग के हैं, उस वर्ग के स्थान के साथ इनका नासिका भी स्थान होता है। तथा वकार का दन्त और ओष्ठ स्थान है।

इनमें कण्ठ से उच्चारित होनेवाले वर्ण कण्ठ्य तथा तालु से जिनका उच्चारण होता हैं वे तालव्य वर्ण कहे जाते हैं। इसी प्रकार मूर्धा स्थान वाले मूर्धन्य और दन्त स्थान वाले दन्त्य वर्ण कहते हैं। ओष्ठ स्थान वाले वर्ण ओष्ठ्य तथा नासिका स्थान वाले वर्ण अनुनासिक कहे जाते हैं।

इन स्थानों के अतिरिक्त एक और स्थान का उल्लेख है जिसका नाम जिह्वामूल है। यह स्थान जिह्वामूलीय वर्णों का होता है।

### जिह्वामूलीय और उपध्मानीय

ये दोनों अयोगवाहक के भीतर आते हैं।

क और ख से पूर्व जो अर्धविसर्ग होता है वह जिह्वामूलीय कहा जाता है।

प और फ से पूर्व में रहने वाला अर्ध-विसर्ग उपध्यानीय कहा जाता है। अर्ध-विसर्ग का चिह्न ⌣ यही है।

यद्यपि आज प्रचलित लोकव्यवहार में इसका प्रयोग नहीं हो रहा है तथापि वैदिक उच्चारण पद्धति में इसका उपयोग होने के कारण इसका यहां उल्लेख कर दिया गया है।

ऊपर अयोगवाह शब्द का उल्लेख किया गया है, इसलिये उसका भी संक्षिप्तपरिचय देना आवश्यक।

अयोगवाह उन्हें कहा जाता है जिनकी गणना वर्णों के भीतर तो नहीं की गई है, पर व्याकरणशास्त्रीय प्रक्रिया के निर्वाह में उनका महत्त्वपूर्ण योगदान है। अयोगवाह-शब्द से 'अनुस्वार विसर्ग, जिह्वामूलीय, उप-ध्मानीय और यम इन पांचों का ग्रहण किया जाता है। इनमें अनुस्वार और विसर्ग का प्रयोग तो प्रचुर मात्रा में किया जाता है। अवशिष्ट तीन अयोगवाह वैदिक प्रयोगों में उपलब्ध होते हैं। अयोगवाहों के स्थान के विषय में कहा गया है कि ये जिस स्वर वर्ण के साथ रहेंगे उस वर्ण का स्थान ही इनका भी स्थान होता है। उदाहरण के लिये विसर्ग जब अकार के आगे रहेगा तो उसका स्थान कण्ठ होगा, किन्तु इकार के आगे रहने पर उसका स्थान तालु हो जायेगा। कहा जा सकता है कि ऐसी स्थिति में ऊपर यह निर्धारण क्यों किया गया है कि विसर्ग का स्थान कण्ठ है? तो इसका उत्तर यह समझना चाहिये कि वह विसर्ग, अकार के बाद में रहने वाले विसर्ग का ही सूचक है न कि सारे वर्णों के आगे रहने वाले विसर्ग का।

एकार और ऐकार का स्थान कण्ठतालु और ओकार और औकार का स्थान कण्ठोष्ठ है। यहां यह नहीं समझना चाहिये कि कण्ठ-तालु और कण्ठोष्ठ नामक ये दोनों कोई स्व-तन्त्र स्थान हैं, किन्तु एकार वर्ण अकार और इकार के मेल से बनता है। इनमें अकार का स्थान कण्ठ और इकार का तालु है, इसलिए एकार का स्थान कण्ठतालु कहा गया है। अकार और उकार के मेल से ओकार बनता है। इसलिये अकार का कण्ठ और उकार का ओष्ठ स्थान लेकर ओकार का स्थान कण्ठोष्ठ कहा गया है।

**प्रयत्न—**

प्रत्येक वर्ण के उच्चारण में उच्चार-यिता को प्रयत्न करना पड़ता है, किन्तु ये प्रयत्न इतने स्वाभाविक एवं सूक्ष्म होते हैं कि झटिति उनका पता नहीं चलता है। चित्त की अवधानता में ही इनका आकलन हो सकता है।

प्रत्येक वर्ण के उच्चारण में आभ्यन्तर

और बाह्य ये दो प्रयत्न होते हैं। आभ्यन्तर अर्थ होता है भीतरी और बाह्य का अर्थ है बाहरी। कौन प्रयत्न भीतरी और कौन प्रयत्न बाहरी है, यह एक विवाद का विषय है जिसका निरूपण अग्रिम अङ्क में किया जायेगा।

आभ्यन्तर प्रयत्न पांच प्रकार का है १—स्पृष्ट, २—ईषत्स्पृष्ट, ३—विवृत, ४—ईषद्विवृत, ५—संवृत।

किस वर्ण का कौन आभ्यन्तर प्रयत्न होता है, इसके लिये वर्णों की निम्नलिखित संज्ञायें की गई हैं—

(अ) ककार से लेकर मकार तक के २५ वर्णों की स्पर्श संज्ञा है।

(ब) य् र् ल् व् इन चार वर्णों की अन्तःस्थ संज्ञा होती है।

(स) श् ष् स् ह् इनकी उष्म संज्ञा होती है।

(१) उपर्युक्त पांच आभ्यन्तर प्रयत्नों में से स्पर्श वर्णों का स्पृष्ट प्रयत्न होता है। इनके उच्चारण काल में तत्तद् स्थानों के साथ जिह्वा का स्पर्श भलीभांति होने के कारण इसे स्पृष्ट प्रयत्न कहते है।

(२) अन्तःस्थवर्णों का ईषत्स्पृष्ट प्रयत्न होता है, क्योंकि इनके उच्चारण के समय जिह्वा का या वायु का तत्तद्—स्थानों से ईषत् संयोग होता है।

(३) स्वर वर्णों का प्रयत्न विवृत होता है, क्योंकि इनके उच्चारण के समय इनके स्थानों का विवृत अर्थात् विकास होता है।

(४) उष्म वर्णों का ईषद्विवृत प्रयत्न होता है। उच्चारण के समय इनके स्थानों का थोड़ा विकास होता है।

(५) ह्रस्व अकार के प्रयोग की स्थिति में संवृत प्रयत्न होता है। किन्तु जब प्रायोगिक प्रक्रिया होती है तो वह संवृत अकार पुनः विवृत हो जाता है।

बाह्य प्रयत्न ग्यारह प्रकार का होता है। इसके नाम हैं—विवार, संवार, श्वास, नाद, घोष, अघोष, अल्पप्राण, महाप्राण, उदात्त, अनुदात्त और स्वरित।

बाह्य प्रयत्न के लिये वर्णों को तीन भागों में बांटा जाता है। वे तीन भाग ये हैं–(१) अच्, (२) खर्, (३) हश्। ये तीनों प्रत्याहार हैं। प्रत्याहार उस संक्षिप्तीकरण प्रक्रिया को कहते है जिसके द्वारा एक छोटे संकेत से अनेक वर्णों का बोध कराया जाय। प्रत्याहार विधायक सूत्र 'आदिरन्त्येन सहेता' है इसके लिये चौदह प्रत्याहार सूत्रों 'अइउण्' आदि का अभ्यास होना चाहिये।

उपर्युक्त अच् प्रत्याहार में सारे स्वर वर्ण


बालोपयोगिनी लघुकथा

## ७—कौत्सस्य गुरुभक्तिः

श्रीपद्मशास्त्री, माण्डलगढ़ः (राज०)

आसीत्संवर्धनं नामारण्यं
रम्यं हि सर्वतः ।
आश्रमे न्यवसत्तत्र
वरतन्तु स्तपोधनः ॥ १ ॥
तस्य शिष्येषु कौत्सोऽयं
गुरुसेवापरायणः ।

एक संवर्धन नामक सुन्दर वन था वहां के एक आश्रम में वरतन्तु नामक तपोधन रहते थे ॥ १ ॥

उनके शिष्यों में कौत्स ने, जो गुरु की सेवा

---

आते हैं। खर् प्रत्याहार में प्रत्येक वर्ग के पहले दूसरे वर्ण तथा श ष स ये तीन वर्ण आते हैं। हश् प्रत्याहार में प्रत्येक वर्ग के तीसरे, चौथे और पांचवें वर्ण तथा य र ल व और ह ये वर्ण आते हैं। इनमें—

१—खर् प्रत्याहार के वर्णों का विवार, श्वास अघोष प्रयत्न होता है।

२—हश् प्रत्याहार के वर्णों का संवार नाद घोष प्रयत्न होता है।

३—अच् प्रत्याहार के वर्णों का उदात्त, अनुदात्त, स्वरित प्रयत्न होता है।

५—प्रत्येक वर्ग के प्रथम, तृतीय, पञ्चम वर्ण तथा य व र ल और स्वर वर्णों का अल्प प्राण प्रयत्न होता है। इनके उच्चारण के समय प्राण वायु का अल्प प्रयोग होता है।

६—प्रत्येक वर्ग के दूसरे चौथे वर्ण तथा श ष स ह इनका महाप्राण प्रयत्न होता है।

जिन वर्णों का उच्चारणस्थान और आभ्यन्तर प्रयत्न समान होता है, उन वर्णों की परस्पर "सवर्ण" संज्ञा होती है। सवर्ण संज्ञा विधायक सूत्र 'तुल्यास्यप्रयत्नं सवर्णम्' है। बाह्य प्रयत्न की सवर्ण संज्ञा में कोई उपयोगिता नहीं है तथापि सन्धि कार्य के समय जब सादृश्य की विवक्षा होती है तब "वाग्घरिः" इत्यादि प्रयोगों में इस प्रयत्न की आवश्यकता पड़ती है। इसका निरूपण आगे किया जायेगा। ( क्रमशः )

# भारती

R. J. No. 2617
Licence. No. PP.9.
'Licenced to Post.
Without prepayment





प्रकाशक:—जयबहादुरसिंह पता : भारती भवन, गोपालजी का रास्ता, जयपुर ३०२००३। दूरभाष 75496
राधेश्याम द्वारा श्री शङ्कर आर्ट प्रिण्टर्स, त्रिपोलिया बाजार, जयपुर में मुद्रित दूरभाष: ६१७६७




## ७–कौत्सस्य गुरुभक्तिः

श्रीपद्मशास्त्री, माण्डलगढ़ः (राज०)

आसीत्संवर्धनं नामारण्यं
रम्यं हि सर्वतः ।
आश्रमे न्यवसत्तत्र
वरतन्तु स्तपोधनः ॥ १ ॥

एक संवर्धन नामक सुन्दर वन था वहां के एक आश्रम में वरतन्तु नामक तपोधन रहते थे ॥ १ ॥

तस्य शिष्येषु कौत्सोऽयं
गुरुसेवापरायणः ।

उनके शिष्यों में कौत्स ने, जो गुरु की सेवा

---

आते हैं। खर् प्रत्याहार में प्रत्येक वर्ग के पहले दूसरे वर्ण तथा श ष स ये तीन वर्ण आते हैं। हश् प्रत्याहार में प्रत्येक वर्ग के तीसरे, चौथे और पांचवें वर्ण तथा य र ल व और ह ये वर्ण आते हैं। इनमें—

१—खर् प्रत्याहार के वर्णों का विवार, श्वास अघोष प्रयत्न होता है।

२—हश् प्रत्याहार के वर्णों का संवार नाद घोष प्रयत्न होता है।

३—अच् प्रत्याहार के वर्णों का उदात्त, अनुदात्त, स्वरित प्रयत्न होता है।

५—प्रत्येक वर्ग के प्रथम, तृतीय, पञ्चम वर्ण तथा य व र ल और स्वर वर्णों का अल्प प्राण प्रयत्न होता है। इनके उच्चारण के समय प्राण वायु का अल्प प्रयोग होता है।

६—प्रत्येक वर्ग के दूसरे चौथे वर्ण तथा श ष स ह इनका महाप्राण प्रयत्न होता है।

जिन वर्णों का उच्चारणस्थान और आभ्यन्तर प्रयत्न समान होता है, उन वर्णों की परस्पर "सवर्ण" संज्ञा होती है। सवर्ण संज्ञा विधायक सूत्र 'तुल्यास्यप्रयत्नं सवर्णम्' है। बाह्य प्रयत्न की सवर्ण संज्ञा में कोई उपयोगिता नहीं है तथापि सन्धि कार्य के समय जब सादृश्य की विवक्षा होती है तब "वाग्घरिः" इत्यादि प्रयोगों में इस प्रयत्न की आवश्यकता पड़ती है। इसका निरूपण आगे किया जायेगा। (क्रमशः)

साग्रहं प्रार्थयाञ्चक्रे
गुरोः ! का गुरुदक्षिणा ॥ २ ॥

में निपुण थे, आग्रहपूर्वक प्रार्थना की हे गुरो ! मैं आपको क्या गुरुदक्षिणा दूं ॥ २ ॥

वत्स ! तुष्टोऽस्मि ते भक्त्या
सेवया विनयेन च ।
आग्रहमकरोद्दातुं
तेन क्रुद्धोऽभवद् गुरुः ॥ ३ ॥

हे वत्स ! मैं तुम्हारी भक्ति, विनय एवं सेवा से प्रसन्न हूँ। जब कौत्स ने दक्षिणा देने का अधिक आग्रह किया तब गुरु क्रुध होकर बोले ॥ ३ ॥

त्वं चतुर्दशविद्याश्च
पाठितोऽसि मयानघ !
तच्चतुर्दशकोटीश्च
दक्षिणां दातुमर्हसि ॥ ४ ॥

हे अपाप ! मुझ से तुमने १४ विद्याएं पढ़ीं हैं अतः तुम्हें १४ करोड़ स्वर्णमुद्रा की दक्षिणा देनी चाहिए ॥ ४ ॥

दक्षिणायाः प्रबन्धार्थमा-
श्रमात्स विनिर्गतः ।
अयोध्यां प्राप्य नृपते
रघोरद्यातिथिर्बभौ ॥ ५ ॥

दक्षिणा के प्रबन्ध के लिए वह आश्रम से निकल पड़ा । अयोध्या पहुंच कर आज वह राजा रघु का अतिथि बना ॥ ५ ॥

स्वागतञ्चाकरोद्राजा
वरतन्तोरनामयम् ।
पप्रच्छ पूजयित्वा तं
कां सेवां करवाणि ते ? ॥ ६ ॥

राजा रघु ने उसका स्वागत किया और बरतन्तु की कुशल पूछी और विधिपूर्वक पूजा करके कहा कि मैं आपकी क्या सेवा करूं ॥ ६ ॥

कुशलं वर्तते राजन्न-
स्माकं सर्वथाश्रमे ।
भवादृशे महाराजे
प्रजानामशुभं कुतः ॥ ७ ॥

हे राजन् ! हमारे आश्रम में सर्वथा कुशल है। आप जैसे महाराज के होने पर प्रजा का क्या अशुभ हो सकता है ? ॥ ७ ॥

रिक्तकोशो भवान् राजन् !
दत्तसर्वस्वदक्षिणः ।
अनुजानातु मां गन्तुं
दक्षिणार्थं गुरोर्हि नः ॥ ८ ॥

हे राजन् ! आपका खजाना खाली हो चुका है आप सब कुछ दक्षिणा में दे चुके हैं। मुझे मेरे गुरु के लिए दक्षिणा लाने की आज्ञा दो ॥ ८ ॥

ब्रह्मन् ! न कोऽपि मद्गेहाद्
रिक्तपाणिर्विनिर्गतः ।

मेरे घर से आजतक कोई खाली हाथ

यज्ञशालां समाश्रित्य
विश्रमन्तु भवानितः ॥ ९ ॥
स वायुरथमारुह्य
रात्रौ सुप्तो विदांवरः ।
प्रातःकाले कुबेरस्य
पुरमाक्रमितुं तदा ॥१०॥
तेन भीतः कुबेरोऽसौ
राज्ञः कोषे हिरण्मयीम् ।
वृष्टिं ववर्ष धर्मज्ञस्तेन
तुष्टोऽभवन्नृपः ॥११॥
समुपेत्य धनागारं
सुवर्णं सकलं रघुः ।
प्रातः कौत्साय प्रायच्छ-
द्विनयेन समन्वितः ॥१२॥
कौत्सेन कथितं राजन् !
तव कामदुघा धरा ।
भवानात्मगुणोपेतमात्मजं
लभतामिति ॥१३॥
दक्षिणां गुरवे कौत्सो
निवेद्य विधिपूर्वकम् ।
लब्ध्वा गुरोराशिषञ्च
स्वगृहं प्रतिनिर्गतः ॥१४॥
आदर्शो गुरुभक्तानां
कौत्सो विद्यावतां वरः ।
दातॄणाञ्च महाराजो
रघुः श्रेष्ठश्च वर्तते ॥

नहीं गया। आप आज रात इस ओर बनी हुई यज्ञशाला में विश्राम कीजिए ॥ ९ ॥

राजा रघु प्रातःकाल ही कुबेर की नगरी पर आक्रमण करने के लिए रात्रि में अपने वायुरथ में ही सो गये ॥ १० ॥

इससे कुबेर डर गया और उसने राजा के खजाने में सोने की वर्षा की इससे राजा रघु बहुत प्रसन्न हुआ ॥ ११ ॥

विनय से युक्त राजा रघु ने प्रातःकाल अपने खजाने में जाकर सारा सुवर्ण कौत्स को दे दिया ॥ १२ ॥

कौत्स ने कहा—हे राजन् ! तुम्हारी यह धरती मनोकामना पूर्ण करने वाली हो। आप अपने अनुरूप ही पुत्र प्राप्त करें। ॥ १३ ॥

कौत्स ने भी विधिपूर्वक इस गुरुदक्षिणा को गुरु के लिए समर्पित किया तथा गुरु का आशीर्वाद लेकर अपने घर चला गया ॥ १४ ॥

कौत्स विद्या पढ़ने वालों का तथा गुरु-भक्तों का आदर्श था जब कि दानियों का आदर्श महाराज रघु थे ॥



# सूक्ति-सुधा

## धनान्यर्जयध्वम्

डॉ० श्रीगङ्गाधरभट्टमहोदयाः, जयपुरम्

माता निन्दति नाभिनन्दति पिता भ्राता न संभाषते ।
भृत्यः कुप्यति नानुगच्छति सुतः कान्ता च नालिङ्गते ।
अर्थप्रार्थनशंकया न कुरुतेऽप्यालापमात्रं सुहृत् ।
तस्मादर्थमुपार्जयस्व च सखे स्वार्थस्य सर्वे वशाः ।

धनहीनस्य मानवस्य जीवनं निरर्थकम् भवति । यस्य जनिमतः सविधे धनं नास्ति तस्य माता निन्दां करोति । समग्ररूपेण स मातृवात्सल्यं न लभते । जनकस्तस्याभिनन्दनं न विदधाति । भ्राता तेन सह संभाषणं न करोति । भृत्यः सदैव कोपकषायित एव वर्तते । सुतः निर्धनस्य निदेशपालनं न करोति । प्रिया पत्नी अपि नानुकूलमाचरति । मित्राणि अपि धनप्रार्थनां शङ्कमाना आलापमात्रमपि न कुर्वन्ति । अतः हे सखे धनानि उपार्जय । सर्वे एव सम्पन्नस्य वशगाः भवन्ति ।

जिस मानव के पास धन नहीं होता उससे उसकी माता भी प्रसन्न नहीं रहती वह सदैव उसकी निन्दा करती है । पिता उसके वचनों का अभिनन्दन नहीं करता । भाई उससे प्रेम से वार्तालाप नहीं करता । दरिद्र व्यक्ति से उसका सेवकवर्ग सदैव कुपित रहता है पुत्र उसकी आज्ञा का पालन नहीं करता । भार्या उसका सम्मान नहीं करती तथा उसके अनुकूल आचरण नहीं करती । मित्रवर्ग भी धन मांगने की आशंका से उससे दूर ही रहता है । सहायता और सहयोग की बात तो दूर रही वह उससे मिलने से भी दूर रहता है । हे मित्र दरिद्रता के ये सभी विनाशकारी परिणाम हैं । अतः धन का उपार्जन करो । समस्त संसार स्वार्थ के आधीन है ।






R. J. No. 2617
Licence. No. PP.9,
'Licenced to Post.
Without prepayment



प्रकाशक:—जयबहादुरसिंह पता : भारती भवन, गोपालजी का रास्ता, जयपुर ३०२००३। दूरभाष 75496
राधेश्याम द्वारा श्री शङ्कर आर्ट प्रिन्टर्स, त्रिपोलिया बाजार, जयपुर में मुद्रित दूरभाष: ६१७६७